ॐ

आचार्यश्रीविजयलब्धिसूरीश्वरैर्विरचितः

श्री

# तत्त्वन्यायविभाकरः ।



प्रकाशिका—

लब्धिसूरीश्वरजैनग्रन्थमाला ।

श्रीमद्विजयानन्दसूरीश्वरेभ्यो नमः

श्रीविजयलब्धिसूरीश्वरजैनग्रन्थमालायाश्चतुर्थो मणिः

# तत्त्वन्यायविभाकरः

सद्धर्मरक्षकाऽऽचार्यश्रीमद्विजयकमलसूरीश्वर
पट्टालङ्कारजैनरत्नव्याख्यानवाचस्पति
श्रीमद्विजयलब्धिसूरीश्वरैः
विरचितः ॥






आचार्यश्रीविजयगम्भीरसूरिवरोपदिष्ट
मद्रासश्रीजैनसङ्घसाहाय्येन,
जमनादासात्मजचन्दुलालेन प्रकाशितः

सं० १९९५ मूल्यं आणकाष्टकम् प्रतयः ५००

प्राप्तिस्थानम्
शा. चन्दुलाल जमनादास
छाणी ( वडोदरा स्टेट )

लब्धिसूरीश्वरजैनग्रन्थमाला ।

| | | |
|---|---|---|
| १ | जैनव्रतविधि संग्रह | ०-८-० |
| २ | हीरप्रश्नोत्तराणि | ०-१२-० |
| ३ | श्रीपालचरित्रम् | ०-०-० |
| ४ | तत्त्वन्यायविभाकरः | ०-८-० |
| ५ | पंचसूत्रम् | ( प्रेस ) |
| ६ | आरंभसिद्धिः | ( ,, ) |

मुद्रक :
शा. गुलाबचंद लल्लुभाइ
श्री महोदय प्री. प्रेस-भावनगर.



# प्र....स्ता....व....ना.

सुविदितमेवैतद्विवेचनाञ्चितलोचनानां पक्षपातगन्धविधुराणां सहृदयानां लब्धवर्णाग्रेसराणां यदभ्यर्हणार्हार्हच्छासनं स्याद्वादरत्नप्रभाभासुरं दार्शनिकान्वेक्षणाध्वनि कियत्सामञ्जस्यमुपयातीति । एकान्तपिशाचिकावेशाविष्टा हि दर्शनान्तरीयाः कदापि नैकमपि वस्तु याथातथ्येन निर्णेतुं पारयन्तो परस्परविरोधिनिस्सारवाक्प्रपञ्चेन केवलं पामरान् सरलहृदयान् पातयन्ति निर्वृतिसुखनगरगमनमार्गात्सुललितात् । प्रत्यक्षेण पश्यन्तोऽपि अनुमानेनानुमिन्वन्तोऽपि शब्देन बुद्ध्यमाना अपि भङ्ग्यन्तरेण स्वयं जल्पन्तोऽपि वस्तुतत्त्वमनेकान्तं निस्तत्त्वकुतर्कवासनावासितमानसा भृशं प्रतिबोधितास्सन्तोऽपि न चेतयन्त इति किं ब्रूमः कर्मवैचित्र्य सौराज्यमेतेषाम् ॥

अनेकान्तवादोऽयं क्वचिदपि कथञ्चिदपि विरोधलेशेनाप्यनाक्रान्तः सौलभ्येन पदार्थतत्त्वप्रबोधनपटिष्ठस्सर्वज्ञेनर्ते न कथञ्चिदपि प्रतिपाद्यमानो भवितुमर्हतीति नैवात्र कस्यापि शङ्कातङ्कः । एतद्वादप्रधानेन जैनागमेन रत्नत्रयमेव परमनिर्वृतिसाधनाय प्रभवतीति प्रतिपादितम् । तत्त्वश्रद्धारत्नं ज्ञानरत्नं क्रियारत्नमिति रत्नत्रयम् । एवञ्च ज्ञानक्रियाभ्यां मोक्षः प्रतिपादितो भवति । तत्र रत्नत्रयविषया अनेके ग्रन्थाः प्राचीनाचार्यसंदृब्धाः सुविशाला वरीवृतति । परं केचिन्निगूढत्वाद्बालानां दुरवगाहाः केचन तत्त्वानामेव प्रतिपादकाः अन्ये ज्ञानानामेवापरे तु चारित्रस्यैव । अतो नैतेभ्योऽनायासेन बालानां ग्रहणं घटत इति मन्वानैर्दया-

लुभिः कविकुलकिरीटव्याख्यानवाचस्पतीति गरीयःपदवीविभूषितैर्नैकासु भाषासु नानाग्रन्थप्रणेतृभिर्विचक्षणप्रवरैर्भव्यजनतातापप्रणोदिभिर्जैनजगद्वन्दितचरणारविन्दैः प्रातस्मरणीयैराचार्यवर्यैः श्रीमद्विजयकमलसूरीश्वरपट्टालङ्कारैर्विजयलब्धिसूरीश्वरैः प्राचीनपन्थानमवलम्ब्य सरलतया ग्रन्थोऽयं व्यरचि ।

अत्र च भागत्रयमस्ति सम्यक्श्रद्धानिरूपणं सम्यक्संविन्निरूपणं सम्यक्चरणनिरूपणमिति । प्रथमे तत्त्वानां नवानां द्वितीये मतिश्रुतावधिमनःपर्यवकेवलज्ञानरूपाणां प्रमाणानां तृतीये चरणकरणयोस्सुगमतया निरूपणं कृतमस्ति । वैशिष्ट्यञ्चात्रेदमेव यत्तत्त्वादीनां कचिल्लक्षणरूपेण कचित्फलानुमेयतया कचित्स्वरूपवर्णनरूपेण कचिच्चोपलक्षतया प्रदर्शितानि स्वरूपाणि यतो बालानां तर्ककौशल्यमप्युदीयादिति । तथा सम्यक्श्रद्धासंविच्चरणानि मोक्षमार्गाः, सूक्ष्मैकेन्द्रियद्वित्रिचतुरिन्द्रियेत्यादिवाक्यैरनेके न्यायाः सूच्यन्ते । तदेतत्सर्वं एभिरेव ग्रन्थकृद्भिर्मुद्रणाय सन्नद्धायां स्वोपज्ञटीकायां प्रदर्श्यते । अतो विचारकुशलैः कोविदतल्लजैरत्र न्यूनाधिकत्वं नोत्प्रेक्ष्यम् ॥

तदद्य ग्रन्थोऽयं विदुषां परितोषाय पुरतस्समुपस्थाप्यते । लेखनमुद्राप्रमादजा अशुद्धीर्विशोध्य गुणदोषविवेचनकुशलैर्मीमांसकैरनुग्रहदृष्ट्याऽयं विलोकनीय इत्याशास्ते—

ईडरनगरे
पौषकृष्णपंचम्याम्
१०–१–३९

मुनिर्विक्रमविजयः ।



॥ ॐ नमो वीतरागाय ॥

श्रीमद्विजयलब्धिसूरीश्वरविरचितः

# तत्त्वन्यायविभाकरः ॥

भक्त्युद्रेकनमत्सुराधिपशिरःकोटीररत्नप्रभा-
प्रातस्मेरपदाम्बुजं निरुपमज्ञानप्रभाभासुरम् ।
रागद्वेषतृणालिपावकनिभं वाणीसुधाम्भोनिधिं,
श्रीमद्वीरजिनेश्वरं प्रतिदिनं वन्दे जगद्वल्लभम् ॥

प्रज्ञाविभवसंमदिष्णुकथकप्रौढोक्तिविद्रावण-
प्रवणं जीवगणोपजीवकदयादृष्टिप्रकर्षोज्ज्वलम् ।
नत्वा श्रीकमलाख्यसूरिमसकृद्ध्यात्वा च जैनागमं,
तत्त्वन्यायविभाकरं सुललितं ग्रन्थं प्रकुर्वे मुदा ॥

सम्यक्श्रद्धासंविच्चरणानि मुक्त्युपायाः । तत्त्वेष्वास्था सम्यक्श्रद्धा । तत्र तत्त्वानि जीवाजीवपुण्यपापाश्रवसंवरनिर्जराबंधमोक्षा नव । जीवा अनन्ताः ॥

धर्माधर्माकाशकालपुद्गलाः पञ्चाजीवाः । जीवेन सहैतान्येव षड् द्रव्याणि । दर्शनान्तराभिमतपदार्थानामत्रैवान्तर्भावः । पुण्यादितत्त्वानामप्ययमेव न्यायः ॥

तत्र पुण्यपापाश्रवबन्धानां पुद्गलपरिणामत्वात् पुद्गलेषु, संवरनिर्जरामोक्षाणां जीवपरिणामत्वाज्जीवेष्वन्तर्भावः । कालं विहाय पञ्चास्तिकाया भवन्ति । गुणपर्यायसामान्यविशेषादयष्षट्स्वेव सङ्गच्छन्ते ॥

पुण्यस्य तु सातोच्चैर्गोत्रमनुष्यद्विकसुरद्विकपञ्चेन्द्रियजातिपञ्चदेहादिमत्रितनूपाङ्गादिमसंहननसंस्थानप्रशस्तवर्णचतुष्कागुरुलघुपराघातोच्छ्वासातपोद्योतशुभखगतिनिर्माणत्रसदशकसुरनरतिर्यगायुस्तीर्थकरनामकर्मरूपेण द्विचत्वारिंशद्भेदाः ॥

ज्ञानान्तरायदशकदर्शनावरणीयनवकनीचैर्गोत्रासातमिथ्यात्वस्थावरदशकनिरयत्रिककषायपञ्चविंशतितिर्यग्द्विकैकद्वित्रिचतुर्जातिकुखगत्युपघाताप्रशस्तवर्णचतुष्काप्रथमसंहननसंस्थानभेदात् द्व्यशीतिविधः पापः ॥

आश्रवस्तु इन्द्रियपञ्चककषायचतुष्काव्रतपञ्चकयोगत्रिकक्रियापञ्चविंशतिभेदाद्द्वाचत्वारिंशद्विधः ।

पञ्चसमितित्रिगुप्तिद्वाविंशतिपरिषहदशयतिधर्मद्वादशभावनापञ्चचारित्रभेदात्संवरस्सप्तपञ्चाशद्विधः ॥



बाह्याभ्यन्तरषट्करूपतपोभेदेन द्वादशप्रकारा निर्जराः ॥ प्रकृतिस्थितिरसप्रदेशभेदा च्चतुर्विधो बन्धः । मोक्षस्तु सत्पदप्ररूपणाद्रव्यप्रमाणक्षेत्रस्पर्शनाकालान्तरभागभावाल्पबहुत्वैर्नवविधः ॥

---

तत्र चेतनालक्षणो जीवः । स द्विविधः । संसारसंसारिभेदात् । अत्र चेतनत्वेन जीव एकविधः, त्रसस्थावरभेदेन द्विविधः । पुंस्त्रीनपुंसकभेदेन त्रिविधः । नारकतिर्यङ्मनुष्यदेवभेदेन चतुर्विधः । इन्द्रियभेदेन पञ्चविधः । पृथिव्यप्तेजोवायुवनस्पतित्रसभेदेन षड्विध इत्येवं विस्तरतस्त्रिषष्ठ्यधिकपञ्चशतविधोऽपि भवतीति विज्ञेयः ॥

सकर्मा संसारी । देहमात्रपरिमाणः, स च सूक्ष्मैकेन्द्रियद्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियभेदेन सप्तविधोऽपि प्रत्येकं पर्याप्तापर्याप्तभेदतश्चतुर्दशविधः ॥

आहारशरीरेन्द्रियोच्छ्वासभाषामनोरूपविषयभेदात् पर्याप्तिष्षोढा । शरीरादिपञ्चयोग्यदलिक-

द्रव्यादानक्रियापरिसमाप्तिराहारपर्याप्तिः । गृहीतशरीरवर्गणायोग्यपुद्गलानां शरीराङ्गोपाङ्गतया रचनक्रियासमाप्तिश्शरीरपर्याप्तिः । त्वगादीन्द्रियनिर्वर्तनक्रियापरिसमाप्तिरिन्द्रियपर्याप्तिः । श्वासोच्छ्वासयोग्यद्रव्यादानोत्सर्गशक्तिविरचनक्रियासमाप्तिः श्वासोच्छ्वासपर्याप्तिः । भाषायोग्यद्रव्यपरिग्रहविसर्जनशक्तिनिर्माणक्रियापरिसमाप्तिर्भाषापर्याप्तिः । मनस्त्वयोग्यद्रव्याहरणविसर्जनशक्तिजननक्रियापरिसमाप्तिर्मनःपर्याप्तिः । आत्मनः पौद्गलिकक्रियाविशेषपरिसमाप्तिः पर्याप्तिः ॥

स्वस्वयोग्यपर्याप्तिपूर्णत्वभाजः पर्याप्ताः । स्वस्वपर्याप्तिपूर्णताविकला अपर्याप्ताः ॥

तत्रैकेन्द्रियस्याद्याश्चतस्रः । द्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियाणां पञ्च । संज्ञिपञ्चेन्द्रियाणां षट्पर्याप्तयः ॥

सूक्ष्माश्च निगोदादिवर्त्तिनः । बादराः स्थूलपृथिवीकायिकादयः । द्वीन्द्रियाः क्रिम्यादयः । त्रीन्द्रियाः पिपीलिकादयः । चतुरिन्द्रिया भ्रमरादयः । असंज्ञिपञ्चेन्द्रिया मनोहीना अगर्भजा मीनादयः । संज्ञिपञ्चेन्द्रिया देवमनुजादयः । एत एव प्राणिनः ॥

तत्र प्राणा द्रव्यभावभेदेन द्विविधाः । द्रव्यप्राणाः



पञ्चेन्द्रियमनोवाक्कायबलोच्छ्वासायूंषि दश । अनन्तज्ञानदर्शनचारित्रवीर्यात्मकाश्चत्वारो भावप्राणाः । स्पर्शकायोच्छ्वासायूंष्येकेन्द्रियाणाम् । रसवाग्भ्यां सह पूर्वोक्ता द्वीन्द्रियाणाम् । घ्राणेन सहैते त्रीन्द्रियाणाम् । चक्षुषा सहैत एव चतुरिन्द्रियाणाम् । श्रोत्रेण सहामी असंज्ञिनाम् । मनसा सहैते संज्ञिपञ्चेन्द्रियाणाम् । अनन्तज्ञानदर्शनचारित्रवीर्याणि चत्वारि सिद्धानां भावप्राणाः ॥

निर्धूताशेषकर्मा असंसारी । स एव सिद्धो जिनाजिनतीर्थातीर्थादिभेदभिन्नश्चरमशरीरत्रिभागोनाकाशप्रदेशावगाही च ॥

इति जीवनिरूपणम्

चेतनाशून्यं द्रव्यमजीवः । गत्यसाधारणहेतुर्द्रव्यं धर्मः । तत्र प्रमाणं जीवपुद्गलानां गतिर्बाह्यनिमित्तापेक्षा गतित्वात् जलस्थमत्स्यादिगतिवदित्यनुमानम् । असंख्येयप्रदेशात्मको लोकाकाशव्यापी च ॥

स्थित्यसाधारणहेतुर्द्रव्यमधर्मः । प्रमाणश्चात्र जीवपुद्गलानां स्थितिर्बाह्यनिमित्तापेक्षा स्थितित्वात्तरुच्छायास्थपान्थवदित्यनुमानम् । असंख्येयप्रदेशात्मको लोकाकाशव्यापी च ॥

अवगाहनागुणमाकाशम् । मानन्तु द्रव्याणां युगपदवगाहस्साधारणबाह्यनिमित्तापेक्षो युगपदवगाहत्वादेकसरोवर्तिमत्स्यादीनामवगाहवदित्यनुमानम्। लोकालोकभेदेन तद्द्विविधम् । चतुर्दशरज्जुप्रमाणः पञ्चास्तिकायात्मको लोकस्तद्व्याप्योऽसंख्येयप्रदेशात्मको लोकाकाशः । तद्भिन्नोऽलोकाकाशोऽनन्तप्रदेशात्मकः ॥

धर्मादयस्त्रयोऽपि स्कन्धदेशप्रदेशभेदेन त्रिविधाः। पूर्णं द्रव्यं स्कन्धः। माध्यमिकौपाधिकभागा देशाः । केवलप्रज्ञापरिकल्पितसूक्ष्मतमो भागः प्रदेशः ॥

वर्तनालक्षणः कालः। स च वर्तमानरूप एक एव। सोऽपि निश्चयव्यवहाराभ्यां द्विविधः। वर्तनादिपर्यायस्वरूपो नैश्चयिकः । ज्योतिश्चक्रभ्रमणजन्यस्समयावलिकादि लक्षणः कालो व्यावहारिकः। वस्तुतस्तु कालोऽयं न द्रव्यात्मकः। किन्तु सर्वद्रव्येषु वर्तनादिपर्यायाणां सर्वदा सद्भावादुपचारेण कालो द्रव्यत्वेनोच्यते ॥

वर्तनादिपर्यायाश्च वर्तनाक्रियापरिणामपरत्वापरत्वरूपेण चतुर्विधाः । तत्र सादिसान्तसाद्यनन्तानादिसान्तानाद्यनन्तभेदभिन्नेषु चतुःप्रकारेष्वे-



केनापि केनचित्प्रकारेण द्रव्याणां वर्तनं वर्तनेत्युच्यते। इयं वर्तना प्रतिसमयं परिवर्तनात्मिका, नातो विवक्षितैकवर्तना द्विसमयं यावदपि स्थितिं कुरुते, अतो या वर्तनायाः परावृत्तिस्सा पर्यायत्वेनाभिधीयते। भूतकाले भूता भविष्यति भविष्यन्त्यो वर्तमानकाले च भवन्त्यो या या द्रव्याणां चेष्टा सः क्रियापर्यायः। प्रयोगपरिणामविस्रसापरिणामाभ्यां जायमाना नवीनत्वप्राचीनत्वलक्षणा या परिणतिस्स परिणामः। यदाश्रयतो द्रव्येषु पूर्वापरभावित्वव्यपदेशः स परत्वापरत्वपर्यायः ॥

रूपवन्तः पुद्गलाः। एते रसगन्धस्पर्शवन्तोऽपि। लोकाकाशव्यापिनः। ते च स्कन्धदेशप्रदेशपरमाणुभेदेन चतुर्विधाः । कृत्स्नतया परिकल्पितपरमाणुसमूहः स्कन्धः । प्रदेशादवार्चीनस्कन्धभागा देशाः। केवलप्रज्ञागम्यस्कन्धानुवर्त्तिसूक्ष्मतमभागः प्रदेशः।स एव पृथग्भूतश्चेत्परमाणुरिति व्यवह्रियते। अयं परमाणुस्सर्वान्तिमकारणं द्रव्यानारभ्यः कार्यलिङ्गकश्च । शब्दान्धकारोद्योतप्रभाच्छायातपादि परिणामवान् । परमाणूनां परिणामविशेषाण्येव पृथिवीजलतेजोवायुशरीराणि ॥

इत्यजीवनिरूपणम्

पौद्गलिकसुखोत्पत्तिजनकं कर्म पुण्यम्। पौद्गलिकमेतत्। इदमेव द्रव्यपुण्यमुच्यते। द्रव्यपुण्यनामककर्मोत्पत्तिहेतुरात्मनश्शुभाध्यवसायो भावपुण्यम्।

आयुर्नामगोत्रकर्मभिन्नमनुकूलवेदनीयं कर्म सातम्। वेदनीयायुर्नामकर्मभिन्नं गौरवजनकं कर्म उच्चैर्गोत्रम्। मानुषत्वपर्यायपरिणतिप्रयोजकं कर्म मनुजगतिः। वक्रगत्या स्वस्वोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणि गतिनियामकं कर्म आनुपूर्वी। मनुष्यत्वोपलक्षिता आनुपूर्वी मनुष्यानुपूर्वी। इमे मनुष्यद्विकशब्दवाच्ये ॥

देवत्वपर्यायपरिणतिप्रयोजकं कर्म सुरगतिः। देवत्वोपलक्षिताऽऽनुपूर्वी सुरानुपूर्वी। इमे सुरद्विके॥

पञ्चेन्द्रियशब्दप्रवृत्तिनिमित्तभूतसदृशपरिणत्यात्मकजातिविपाकोदयवेद्यं कर्म पञ्चेन्द्रियजातिः।

औदारिकशरीरयोग्यगृहीतपुद्गलानां शरीरतया परिणमनप्रयोजकं कर्मौदारिकशरीरम्। वैक्रियपुद्गलानां शरीरत्वेन परिणमनहेतुः कर्म वैक्रियशरीरम्। आहारकपुद्गलानां देहतया परिवर्तनसमर्थं कर्म आहारकशरीरम्। तैजसवर्गणागतपुद्गलानां शरीरतया परिवर्तकं कर्म तैजसशरीरम्। कार्मणवर्गणागतपुद्गलानां शरीरत्वेन परिवर्तनहेतुः कर्म कार्मणशरीरम्। इमानि पञ्च देहानि। तत्राद्यं शरीरं तिर्यङ्मनुष्याणाम्। द्वितीयं देवनारकिणाम्। तृतीयं चतुर्दशपूर्वधरस्यैव। तुर्यपञ्चमे संसारिणां सर्वेषाम्। कार्मणं विहायान्यान्युपभोगवन्ति ॥



अङ्गानि शिरःप्रभृतीन्यष्टौ, उपाङ्गानि तदवयवाङ्गुल्यादीनि, एतन्निमित्तकमौदारिकशरीरसम्बन्धिकर्म औदारिकाङ्गोपाङ्गनाम। तादृशं वैक्रियशरीरसम्बन्धिकर्म वैक्रियाङ्गोपाङ्गनाम। तादृशमेवाहारकशरीरसम्बन्धिकर्म आहारकाङ्गोपाङ्गनाम। इमानि आदिमत्रितनूपाङ्गानि। तैजसकार्मणोस्त्वात्मप्रदेशतुल्यसंस्थानत्वान्न भवन्त्यङ्गोपाङ्गानि। एवमेकेन्द्रियशरीराणामप्यङ्गोपाङ्गानि न भवन्ति। वनस्पत्यादिषु शाखादीनामङ्गत्वादिव्यवहारो न वास्तविकः, किन्तु भिन्नजीवस्य शरीराण्येव ते ॥

अस्थिरचनाविशेषस्संहननम्। उभयतो मर्कटबन्धबद्धयोरस्थ्नोः पट्टाकृतिनाऽपरास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदिकीलिकात्मकान्यास्थिविशिष्टत्वप्रयोजकं कर्म वज्रर्षभनाराचम्। इदमादिमसंहननम् ॥

आकारविशेषस्संस्थानम्। सामुद्रिकलक्षणलक्षि-

तच्चतुर्दिग्भागोपलक्षितशरीरावयवपरिमाणसादृश्यप्रयोजकं कर्म समचतुरस्रसंस्थानम्, इदमादिमसंस्थानम्। तीर्थकराः सर्वे सुराश्चैतत्संस्थानभाजः॥

शरीरवृत्त्याह्लादजनकवर्णोत्पत्तिहेतुभूतं कर्म प्रशस्तवर्णनामकर्म। शरीरवृत्त्याह्लादजनकगन्धोत्पत्तिनिदानं कर्म प्रशस्तगन्धनाम। शरीरेष्वाह्लादजनकरसोत्पत्तिकारणं कर्म प्रशस्तरसनाम। शरीरवृत्त्याह्लादजनकस्पर्शोत्पादननिदानं कर्म प्रशस्तस्पर्शनाम। इमानि प्रशस्तवर्णचतुष्कशब्दवाच्यानि। तत्र शुक्लरक्तपीतनीलकृष्णाः पञ्च वर्णाः, आद्यास्त्रयः प्रशस्ताः। अन्त्यौ द्वावप्रशस्तौ। सुरभ्यसुरभिभेदेन गन्धो द्विविधः। आद्यश्शस्तः, अन्त्योऽशस्तः। रसः कषायाऽऽम्लमधुरतिक्तकटुरूपेण पञ्चविधः। आद्यास्त्रयश्शुभाः अन्त्यावशुभौ। स्पर्शोऽपि मृदुलघुस्निग्धोष्णकठिनगुरुरूक्षशीतभेदादष्टविधः। आद्याश्चत्वारः प्रशस्ताः, अन्त्यास्त्वप्रशस्ताः॥

शरीरस्यागुरुलघुपरिणामप्रयोजकं कर्म अगुरुलघुनाम। सर्वेषां जीवानामेतत्। परत्रासप्रज्ञाप्रहननादिप्रयोजकं कर्म पराघातनाम। उच्छ्वासनिःश्वासप्राप्तिप्रयोजकं कर्म उच्छ्वासनाम। स्वरूपतोऽनुष्णानां शरीराणामुष्णत्वप्रयोजकं कर्म आत-



पनाम। तच्च भानुमण्डलगतभूकायिकानाम्। गात्राणामनुष्णप्रकाशप्रयोजकं कर्म उद्योतनाम। तच्च यतिदेवोत्तरवैक्रियचन्द्रग्रहतारारत्नादीनाम्। प्रशस्तगमनहेतुः कर्म शुभखगतिनाम। जातिलिङ्गाङ्गप्रत्यङ्गानां प्रतिनियतस्थानसंस्थापनाप्रयोजकं कर्म निर्माणनाम। उष्णाद्यभितप्तानां स्थानान्तरगमनहेतुभूतं कर्म त्रसनाम। चक्षुर्वेद्यशरीरप्रापकं कर्म बादरनाम। स्वयोग्यपर्याप्तिनिर्वर्तनशक्तिसंपादकं कर्म पर्याप्तनाम। प्रतिजीवं प्रतिशरीरजनकं कर्म प्रत्येकनाम। शरीरावयवादीनां स्थिरत्वप्रयोजकं कर्म स्थिरनाम। उत्तरकायनिष्ठशुभत्वप्रयोजकं कर्म शुभनाम। अनुपकारिण्यपि लोकप्रियतापादकं कर्म सौभाग्यनाम। कर्णप्रियस्वरवत्त्वप्रयोजकं कर्म सुस्वरनाम। वचनप्रामाण्याभ्युत्थानादिप्रापकं कर्माऽऽदेयनाम। यशःकीर्त्युदयप्रयोजकं कर्म यशःकीर्त्तिनाम। एकदिग्गमनात्मिका कीर्त्तिः सर्वदिग्गमनात्मकं यशः, दानपुण्यजन्या कीर्त्तिः, शौर्यजन्यं यश इति वा॥ इमानि त्रसदशकानि॥

देवभवनिवासकारणायुःप्रापकं कर्म देवायुः। मनुजभवनिवासनिदानायुःप्रापकं कर्म मनुष्यायुः। तिर्यग्भवनिवासहेत्वायुःप्राप्तिजनकं कर्म तिर्यगायुः।

अष्टमहाप्रातिहार्याद्यतिशयप्रादुर्भवननिमित्तं कर्म तीर्थकरनाम ॥

पुण्यमिदं कार्यकारणभेदेन द्विविधम् । एतानि कर्माणि कार्यरूपाणि जीवानुभवप्रकाराणि। एतेषां हेतवस्तु सुपात्रेभ्योऽन्ननिरवद्यवसतिवासोजलसंस्तारकादीनां प्रदानम् । मनसश्शुभसंकल्पः । वाक्काययोश्शुभव्यापारः। जिनेश्वरप्रभृतीनां नमनादय इति दिक् ॥

इति पुण्यतत्त्वम्

दुःखोत्पत्तिप्रयोजकं कर्म पापम् । पौद्गलिकमेतत् । इदमेव द्रव्यपापमुच्यते। द्रव्यपापनामककर्मोत्पत्तिकारणात्माशुभाध्यवसायो भावपापम् ॥

इन्द्रियानिन्द्रियजन्याभिलापनिरपेक्षबोधाऽऽवरणकारणं कर्म मतिज्ञानावरणम् । मतिज्ञानसापेक्षशब्दसंस्पृष्टार्थग्रहणाऽऽवरणकारणं कर्म श्रुतज्ञानाऽऽवरणम् । इन्द्रियानिन्द्रियनिरपेक्षमूर्तद्रव्यविषयप्रत्यक्षज्ञानाऽऽवरणनिदानं कर्मावधिज्ञानाऽऽवरणम् । इन्द्रियानिन्द्रियनिरपेक्षसंज्ञिपञ्चेन्द्रियमनोगतभावज्ञापकात्मप्रत्यक्षज्ञानाऽऽवरणसाधनं कर्म मनःपर्यवाऽऽवरणम् । मनइन्द्रियनिरपेक्षलोकालो-



कवर्त्तिसकलद्रव्यपर्यायप्रदर्शकप्रत्यक्षज्ञानाऽऽवरणसाधनकर्म केवलज्ञानाऽऽवरणम् । इति ज्ञानावरणीय पञ्चकम् ॥

सामग्रीसमवधानासमवधाने सति दानसामर्थ्याभावप्रयोजकं कर्म दानान्तरायः । सम्यग्याचितेऽपि दातृसकाशादलाभप्रयोजकं कर्म लाभान्तरायः । अनुपहताङ्गस्यापि ससामग्रीकस्यापि भोगासामर्थ्यहेतुः कर्म भोगान्तरायः । एकशो भोग्यं भोगो यथा कुसुमादयः । अनुपहताङ्गस्यापि ससामग्रीकस्याप्युपभोगासामर्थ्यहेतुः कर्मोपभोगान्तरायः । अनेकशो भोग्यमुपभोगो यथा वनितादयः । पीनाङ्गस्यापि कार्यकाले सामर्थ्यविरहप्रयोजकं कर्म वीर्यान्तरायः । इत्यन्तरायपञ्चकम् ॥

चक्षुषा सामान्यावगाहिबोधप्रतिरोधकं कर्म चक्षुर्दर्शनावरणम्। तद्भिन्नेन्द्रियेण मनसा च सामान्यावगाहिबोधप्रतिरोधकं कर्म अचक्षुर्दर्शनावरणम्। मूर्तद्रव्यविषयकप्रत्यक्षरूपसामान्यार्थग्रहणावरणहेतुः कर्म अवधिदर्शनावरणम् । समस्तलोकालोकवर्त्तिमूर्तामूर्तद्रव्यविषयकगुणभूतविशेषकसामान्यरूपप्रत्यक्षप्रतिरोधकं कर्म केवलदर्शनावरणम् । इति दर्शनावरणचतुष्कम्, दर्शनलब्धिप्रतिबंधकम्॥

चैतन्याविस्पष्टतापादकं सुखप्रबोधयोग्यावस्थाजनकं कर्म निद्रा । चैतन्यस्याविस्पष्टतापादकं दुःखप्रबोध्यावस्थाहेतुः कर्म निद्रानिद्रा । उपविष्टस्योत्थितस्य वा चैतन्याविस्पष्टतापादकं कर्म प्रचला । चंक्रममाणस्य चैतन्याविस्पष्टतापादकं कर्म प्रचलाप्रचला । जागृदवस्थाध्यवसितार्थ साधनविषयस्वापावस्थाप्रयोजकं कर्म स्त्यानर्द्धिः । इति दर्शनलब्ध्यावारकं निद्रापञ्चकम् ॥

नीचकुलजन्मनिदानं तिरस्कारोत्पादकं कर्म नीचैर्गोत्रम् । दुःखविशेषोपलब्धिकारणं कर्म असातावेदनीयम् । तत्त्वार्थश्रद्धाप्रतिबंधकं कर्म मिथ्यात्व मोहनीयम् ॥

प्रातिकूल्येऽपि स्थानान्तरगमनाभावप्रयोजकं कर्म स्थावरनाम । सूक्ष्मपृथिव्यादिकायेषूत्पत्तिनिदानं कर्म सूक्ष्मनाम । यथा सर्वलोकवर्त्तिनां निगोदादीनाम् । एकेन्द्रियादीनां यथास्वं श्वासोच्छ्वासादिपर्याप्त्यपरिपूर्णताप्रयोजकं कर्मापर्याप्तनाम । यथा लब्ध्यपर्याप्तानाम् । अनन्तजीवानामेकशरीरवत्त्वनिदानं कर्म साधारणनाम । यथा कन्दादौ । प्रयोगशून्यकाले भ्रूजिह्वादीनां कम्पनहेतुः कर्म अस्थिरनाम । नाभ्यधोवयवाशुभत्वप्रयोजकं कर्माशुभनाम । स्व-



स्य दृष्टमात्रेण परेषामुद्वेगजनकं कर्म दुर्भगनाम । अमनोहरस्वरवत्ताप्रयोजकं कर्म दुस्स्वरनाम । यथा खरोष्ट्रादीनाम् । उचितवक्तृत्वेऽप्यग्राह्यत्वादि प्रयोजकं कर्म अनादेयनाम । ज्ञानविज्ञानादियुतत्वेऽपि यशःकीर्त्त्यभावप्रयोजकं कर्मायशःकीर्त्तिनाम । इति स्थावरदशकम् ॥

नारकत्वपर्यायपरिणतिप्रयोजकं कर्म नरकगतिः । आयुःपूर्णतां यावन्नरकस्थितिहेतुः कर्म नरकायुः । बलान्नरकनयनानुगुणं कर्म नरकानुपूर्वी । इति निरयत्रिकम् ॥

अनन्तानुबन्धिनश्चानंतसंसारमूलनिदानमिथ्यात्वहेतुका अनन्तभवानुबन्धस्वभावा आजन्मभाविनो नरकगतिप्रदायिनः सम्यक्त्वघातिनः ॥ एवंभूतं प्रीत्यभावोत्पादकं कर्मानन्तानुबन्धिक्रोधः । तादृशं नम्रताविरहप्रयोजकं कर्म अनन्तानुबन्धिमानः । ईदृक् सरलताऽभावप्रयोजकं कर्म अनन्तानुबन्धिमाया । ईदृशं द्रव्यादिमूर्च्छाहेतुः कर्म अनन्तानुबन्धिलोभः ॥

प्रत्याख्यानावरणभूता वर्षावधिभाविनस्तिर्यग्गतिदायिनो देशविरतिघातिनश्चाप्रत्याख्यानाः ।

एतद्विशिष्टाः पूर्वोक्तस्वरूपाः क्रोधादयोऽप्रत्याख्यानक्रोधादयः ॥

सर्वविरत्यावरणकारिणो मासचतुष्टयभाविनो मनुजगतिप्रदायिनस्साधुधर्मघातिनः प्रत्याख्यानाः। ईदृशाः क्रोधादय एव प्रत्याख्यानक्रोधादयः ॥

ईषत्संज्वलनकारिणः पक्षावधयो देवगतिप्रदा यथाख्यातचारित्रघातिनः संज्वलनाः । ईदृशाश्च क्रोधादय एव संज्वलनक्रोधादयः ॥

हास्योत्पादकं कर्म हास्यमोहनीयम् । पदार्थविषयकप्रीत्यसाधारणकारणं कर्म रतिमोहनीयम् । पदार्थविषयकोद्वेगकारणं कर्म अरतिमोहनीयम् । अभीष्टवियोगादिदुःखहेतुः कर्म शोकमोहनीयम् । भयोत्पादासाधारणं कारणं कर्म भयमोहनीयम् । बीभत्सपदार्थावलोकनजातव्यलीकप्रयोजकं कर्म जुगुप्सामोहयनीम् ॥

स्त्रीमात्रसंभोगविषयकाभिलाषोत्पादकं कर्म पुरुषवेदः। पुरुषमात्रसंभोगविषयकाभिलाषोत्पादकं कर्म स्त्रीवेदः। पुंस्त्रीसंभोगविषयकाभिलाषोत्पादकं कर्म नपुंसकवेदः। इति कषायपञ्चविंशतिः ॥

तिर्यक्त्वपर्यायपरिणतिप्रयोजकं कर्म तिर्यग्ग-



तिः। तिर्यग्गतौ बलान्नयनहेतुकं कर्म तिर्यगानुपूर्वी। इति तिर्यग्द्विकम् ॥

एकेन्द्रियव्यवहारहेतुः कर्मैकेन्द्रियजातिः। अस्यां स्पर्शेन्द्रियमेव। द्वीन्द्रियव्यवहारकारणं कर्म द्वीन्द्रियजातिः। स्पर्शरसने। त्रीन्द्रियव्यवहारसाधनं कर्म त्रीन्द्रियजातिः । स्पर्शरसनघ्राणानि । चतुरिन्द्रियव्यवहारनिदानं कर्म चतुरिन्द्रियजातिः । स्पर्शरसघ्राणचक्षूंषि ॥

अप्रशस्तगमनप्रयोजकं कर्म कुखगतिः। यथा खरोष्ट्रादीनाम् । स्वावयवैरेव स्वपीडाजनननिदानं कर्मोपघातनाम । शरीरनिष्ठाप्रशस्तवर्णप्रयोजकं कर्माप्रशस्तवर्णनाम। यथा काकादीनाम् । शरीरनिष्ठाप्रशस्तगन्धप्रयोजकं कर्माप्रशस्तगन्धनाम । यथा लशुनादीनाम्। शरीरवृत्त्यप्रशस्तरसप्रयोजकं कर्माप्रशस्तरसनाम। यथा निम्बादीनाम्। शरीरवृत्त्यप्रशस्तस्पर्शप्रयोजकं कर्माप्रशस्तस्पर्शनाम । यथा बब्बुलादीनाम्। इत्यप्रशस्तवर्णचतुष्कम् ॥

उभयतो मर्कटबन्धाऽऽकलितास्थिसंचयवृत्तिपट्टबन्धसदृशास्थिप्रयोजकं कर्म ऋषभनाराचम्। उभयतो मर्कटबन्धमात्रसंवलितास्थिसंधिनिदानं कर्म नाराचम्। एकतो मर्कटबन्धविशिष्टास्थिसन्धिनिदानं

कर्मार्धनाराचम् । केवलकीलिकासदृशास्थिबद्धास्थिनिचयप्रयोजकं कर्म कीलिका । परस्परपृथक्स्थितिकानामस्थ्नां शिथिलसंश्लेषनिदानं कर्म सेवार्तम् । इति संहननपञ्चकम् ॥

नाभेरूर्ध्वं विस्तृतिबाहुल्यसल्लक्षणनिदानं कर्म न्यग्रोधपरिमण्डलम् । नाभ्यधोभागमात्रस्य प्रमाणलक्षणवत्त्वप्रयोजकं कर्म सादिः । सलक्षणपाण्यादिमत्त्वे सति निर्लक्षणवक्षःप्रभृतिमत्त्वप्रयोजकं कर्म कुब्जम् । एतद्वैपरीत्यहेतुः कर्म वामनम् । सर्वावयवाशुभत्वनिदानं कर्म हुण्डम् ॥ इति पञ्चसंस्थानानि ॥ एते पापानुभवप्रकाराः ॥

पापबन्धहेतवस्तु प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहाप्रशस्तक्रोधमानमायालोभरागद्वेषक्लेशाभ्याख्यानपिशुनतारत्यरतिपरपरिवादमायामृषावादमिथ्यात्वशल्यानि ॥

इति पापतत्त्वम्

शुभाशुभकर्मग्रहणहेतुराश्रवः । पौद्गलिकोऽयम् । आत्मप्रदेशेषु कर्मप्रापिका क्रिया द्रव्याश्रवः । कर्मोपार्जननिदानाध्यवसायः भावाश्रवः ॥

स्पर्शविषयकरागद्वेषजन्याश्रवः स्पर्शेन्द्रियाश्रवः । रसविषयकरागद्वेषजन्याश्रवः रसनेन्द्रियाश्रवः ।



गन्धविषयकरागद्वेषजन्याश्रवः घ्राणेन्द्रियाश्रवः । रूपविषयकरागद्वेषजन्याश्रवः चक्षुरिन्द्रियाश्रवः । शब्दविषयकरागद्वेषजन्याश्रवः श्रोत्रेन्द्रियाश्रवः । इतीन्द्रियपञ्चकाश्रवः ॥

प्रीत्यभावप्रयुक्ताश्रवः कोधाश्रवः । अनम्रताजन्याश्रवो मानाश्रवः । कापट्यप्रयुक्ताश्रवो मायाश्रवः । संतोषशून्यताप्रयुक्ताश्रवो लोभाश्रवः । इति कषायचतुष्काश्रवः ॥

प्रमादिकर्तृकप्राणवियोगजन्याश्रवो हिंसाश्रवः । अयथावद्वस्तुप्रवृत्तिजन्याश्रवोऽसत्याश्रवः । स्वाम्यवितीर्णपदार्थस्वायत्तीकरणजन्याश्रवः स्तेयाश्रवः । सति वेदोदये औदारिकवैक्रियशरीरसंयोगादिजन्याश्रवोऽब्रह्माश्रवः । द्रव्यादिविषयाभिकाङ्क्षाजन्याश्रवः परिग्रहाश्रवः । इत्यव्रतपञ्चकाश्रवः ॥

शरीरचेष्टाजन्याश्रवः कायाश्रवः । वाक्क्रियाजनिताश्रवो वागाश्रवः । मनश्चेष्टाजन्याश्रवो मन आश्रवः । इति योगत्रिकाश्रवः ॥

अनुपरतानुपयुक्तभेदभिन्ना कायजन्यचेष्टा कायिकी । संयोजननिर्वर्तनभेदभिन्ना नरकादिप्राप्तिहेतुर्विषशस्त्रादिद्रव्यजनिता चेष्टा अधिकरणिकी ।

जीवाजीवविषयकद्वेषजनकक्रिया प्रादोषिकी । स्वपरसन्तापहेतुः क्रिया पारितापनिकी । स्वपरप्राणवियोगप्रयोजिका क्रिया प्राणातिपातिकी । जीवाजीवभेदभिन्ना जीवाजीवघातात्मिका चेष्टाऽऽरम्भिकी । जीवाजीवविषयिणी मूर्च्छानिर्वृत्ता क्रिया पारिग्रहिकी । मोक्षसाधनेषु मायाप्रधाना प्रवृत्तिर्मायाप्रत्ययिकी । अभिगृहीतानभिगृहीतभेदभिन्ना अयथार्थवस्तुश्रद्धानहेतुका क्रिया मिथ्यादर्शनप्रत्ययिकी । जीवाजीवविषयिणी विरत्यभावानुकूला क्रियाऽप्रत्याख्यानिकी । प्रमादिनो जीवाजीवविषयकदर्शनादरात्मिका क्रिया दृष्टिकी । सदोषस्य जीवाजीवविषयकं स्पर्शनं स्पृष्टिकी । प्रमादात् प्राक्स्वीकृतपापोपादानकारणजन्यक्रिया प्रातीत्यिकी । कारुण्यवीरबीभत्सादिरसप्रयोक्तॄणां प्रेक्षकाणां च सानुरागिणां नाट्यादिजन्या क्रिया सामन्तोऽपनिपातिकी । यंत्रादिकरणकजलनिःसारणधनुरादिकरणकशरादिमोचनान्यतररूपा क्रिया नैःशस्त्रिकी । सेवकयोग्यकर्मणां क्रोधादिना स्वेनैव करणं स्वाहस्तिकी । अर्हदाज्ञोल्लंघनेन जीवादिपदार्थप्ररूपणा यद्वा जीवाजीवान्यतरविषयकसावद्याज्ञाप्रयोजिका क्रिया आज्ञापनिकी । पराऽऽचरिताप्रकाशनीयसावद्यप्रकाशकरणं विदारणिकी । अनवेक्षितासंमार्जितप्रदेशे शरी-



रोपकरणनिक्षेपः अनाभोगप्रत्ययिकी । जिनोदितकर्तव्यविधिषु प्रमादादनादरकरणमनवकांक्षप्रत्ययिकी । आर्त्तरौद्रध्यानानुकूला तीर्थकृद्विगर्हितभाषणात्मिका प्रमादगमनात्मिका च क्रिया प्रायोगिकी । इन्द्रियस्य देशोपघातकारिसर्वोपघातकार्यन्यतररूपा क्रिया सामुदायिकी । पररागोदयहेतुः क्रिया प्रेमप्रत्ययिकी । क्रोधमानोदयहेतुः क्रिया द्वेषप्रत्ययिकी । अप्रमत्तसंयतस्य वीतरागच्छद्मस्थस्य केवलिनो वा सोपयोगं गमनादिकं कुर्वतो या सूक्ष्मक्रिया सैर्यापथिकी । इति क्रियापञ्चविंशतिः ॥

समाप्तमाश्रवतत्त्वम्

समित्यादिभिः कर्मनिरोधः संवरः । सोऽयमात्मपरिणामो निवृत्तिरूपः । कर्मपुद्गलाऽऽदानविच्छेदो द्रव्यसंवरः । भवहेतुक्रियात्यागस्तन्निरोधे विशुद्धाध्यवसायो वा भावसंवरः ॥

स पुनर्द्विविधो देशसर्वभेदात् । देशसंवरस्त्रयोदशगुणस्थानं यावद्भवति । सर्वसंवरस्त्वन्तिमगुणस्थान एव निखिलाश्रवाणां निरुद्धत्वात् । इतरत्र तु न तथा ॥

तत्र मिथ्यात्वसास्वादनमिश्राविरतदेशविरतप्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिकरणसूक्ष्मसंपरायोप-

शान्तमोहक्षीणमोहसयोग्ययोगिभेदाच्चतुर्दशविधानि गुणस्थानानि ॥

ज्ञानदर्शनचारित्रात्मकानां जीवगुणानां यथायोगं शुद्ध्यशुद्धिप्रकर्षाप्रकर्षकृताः स्वरूपभेदा गुणस्थानानानि ॥

मिथ्यात्वगुणस्थानञ्च व्यक्ताव्यक्तभेदेन द्विविधम् । कुदेवकुगुरुकुधर्मान्यतमस्मिन् देवगुरुधर्मबुद्धिर्व्यक्तमिथ्यात्वम् । इदञ्च संज्ञिपञ्चेन्द्रियाणामेव ॥

अव्यक्तो मोहोऽव्यक्तमिथ्यात्वम् । इदमनादि । व्यक्तमिथ्यात्वप्राप्तुरेव मिथ्यात्वगुणस्थानं भवेदिति केचित् । अस्य स्थितिर्भव्यजीवमाश्रित्यानादिसान्ता । सादिसान्ता च पतितभव्यस्य । अभव्यमाश्रित्यानाद्यनन्ता ॥

उपशमसम्यक्त्वपतितस्यानवाप्तमिथ्यात्वस्य सर्वथा यदपरित्यक्तसम्यक्त्वतयाऽवस्थानं तत्सास्वादनगुणस्थानम् । समयादिषडावलिकाकालपर्यन्तमिदम् ॥

अनादिकालानुवृत्तमिथ्यात्वप्रथमकषायचतुष्कोपशमनजन्यं सम्यक्त्वमुपशमसम्यक्त्वम् । तद्द्विविधम् । अन्तरकरणजन्यं स्वश्रेणिजन्यं चेति । उपशमसम्यक्त्वं करणत्रयापेक्षम् ॥



करणत्रयन्तु यथाप्रवृत्त्यपूर्वानिवृत्तिरूपम् । आयुर्वर्जसप्तकर्मणः स्थितिं पल्योपमासंख्यातभागहीनैककोटीकोटिपरिमाणां विधायाभिन्नपूर्वघनीभूतरागद्वेषात्मकग्रन्थिसमीपगमनानुकूलाध्यवसायो यथाप्रवृत्तिकरणम् । घनीभूतरागद्वेषग्रन्थिभेदनप्रयोजकापूर्वाध्यवसायोऽपूर्वकरणम् । मिथ्यात्वस्थितिरन्तर्मुहूर्त्तमुदयक्षणादुपर्यतिक्रम्योपरितनीं विष्कम्भमित्यान्तर्मुहूर्त्तपरिमाणं तत्प्रदेशवेद्यदलिकाभावप्रयोजकाध्यवसायोऽनिवृत्तिकरणम् । तादृशतत्प्रदेशवेद्यदलिकाभावोऽन्तरकरणम् । श्रेणितो मिथ्यात्वमोहनीयानन्तानुबन्धिचतुःकषायाद्युपशमनतः श्रेणिजन्योपशमसम्यक्त्वं भवति । उभयविधसम्यक्त्वात्पततः सास्वादनगुणस्थानं भवति ॥

मिश्रमोहनीयकर्मोदयादन्तर्मुहूर्त्तस्थितिकोऽर्हदुदिततत्त्वेषु द्वेषाभावो मिश्रगुणस्थानम् । यथान्नापरिचितनालिकेरद्वीपनिवासिमनुजस्यान्ने । अत्र जीवो नायुर्बध्नाति न वा म्रियते । अपि तु सम्यक्त्वं मिथ्यात्वं वाऽवश्यं याति ॥

सम्यक्त्वे सत्यप्रत्याख्यानावरणकषायोदयेन सावद्ययोगात्सर्वथाऽविरमणमविरतसम्यग्दृष्टिगुणस्थानम् । उत्कृष्टतो मनुजभवाधिकषट्षष्ठिसागरोपमस्थितिकमिदम् । सम्यक्त्वञ्च भव्यसंज्ञिपञ्चेन्द्रि-

याणां निसर्गादुपदेशाद्वा भवति । उत्कृष्टतोऽपार्धपुद्गलपरावर्तसंसारावशिष्टानामेतद्भवेत् । जघन्यतस्तद्भवमुक्तिगामिनोऽपि ॥

प्रत्याख्यानकषायोदयात्सर्वसावद्यस्यैकदेशाद्विरतस्य जघन्यमध्यमोत्कृष्टान्यतमवद्विरतिधर्मावाप्तिर्देशविरतगुणस्थानम् । उत्कर्षतो देशोनपूर्वकोटिं यावत्स्थितिकमिदम् ॥

संज्वलनकषायमात्रोदयप्रयुक्तप्रमादसेवनं प्रमत्तसंयतगुणस्थानम् । प्रमादाश्च मदिराकषायविषयनिद्राविकथानामानः पञ्च । देशविरत्यपेक्षयात्र गुणानां विशुद्धिप्रकर्षोऽविशुद्ध्यपकर्षश्च, अप्रमत्तसंयतापेक्षया तु विशुद्ध्यपकर्षोऽविशुद्धिप्रकर्षश्च । एतदन्तर्मुहूर्त्तमानमिति केचित् । पूर्वकोटिं यावदित्यन्ये ।

संज्वलनकषायनोकषायाणां मन्द्रोदयतः प्रमादाभावोऽप्रमत्तसंयतगुणस्थानम् । नोकषाया हास्यादयः षट् वेदत्रयश्च ॥ अन्तर्मुहूर्त्तस्थितिकमिदम् ॥

स्थितिघातरसघातगुणश्रेणिगुणसंक्रमापूर्वस्थितिबन्धात्मकानामर्थानां विशुद्धिप्रकर्षादपूर्वतया निर्वर्तनमपूर्वकरणगुणस्थानम् । प्रचुरमानाया ज्ञानावरणीयादिकर्मस्थितेरपवर्तनाभिधकरणेन तनूकरणं स्थितिघातः । प्रचुररसस्य तेनैव करणेन तनूकरणं



रसघातः । तेनैव करणेनावतारितस्य दलिकस्य प्रतिक्षणमसंख्येयगुणवृद्ध्या विरचनं गुणश्रेणिः । बध्यमानशुभप्रकृतिष्वबध्यमानाशुभप्रकृतिदलिकस्य विशुद्धितो नयनं गुणसंक्रमः । विशुद्धिप्रकर्षेण गुर्व्याः कर्मस्थितेर्लघुतया बन्धनमपूर्वस्थितिबन्धः । अन्तर्मुहूर्त्तकालमेतत् । अत्रस्थो जीवः क्षपक उपशमकश्चेति द्विविधः ॥

अन्योन्याध्यवसायस्थानव्यावृत्त्यभावविशिष्टसूक्ष्मसंपरायापेक्षस्थूलकषायोदयवत्स्थानमनिवृत्तिकरणगुणस्थानम् । अन्तर्मुहूर्त्तकालमेतत् । अत्रस्थोऽपि द्विविधः क्षपक उपशमकश्चेति । क्षपकश्रेणिस्थो क्षपकः । अयं दर्शनावरणीयप्रकृतित्रिकं नामप्रकृतित्रयोदशकं मोहनीयप्रकृतिविंशतिश्चात्र क्षपयति । उपशमश्रेणिस्थ उपशमकः । मोहनीयप्रकृतिविंशतिमेवोपशमयत्ययम् ॥

मोहनीयविंशतिप्रकृतीनां शमनात् क्षयाद्वा सूक्ष्मतया लोभमात्रावस्थानस्थानं सूक्ष्मसंपरायगुणस्थानम् । अन्तर्मुहूर्त्तमानमेतत् ॥

उपशमश्रेण्या सर्वकषायाणामुदयायोग्यतया व्यवस्थापनस्थानमुपशान्तमोहगुणस्थानम् । अत्राष्टाविंशतिमोहनीयप्रकृतीनामुपशमो भवति । उप-

शान्तमोहस्तूत्कर्षेणान्तर्मुहूर्त्तकालमत्र तिष्ठति। तत ऊर्ध्वं नियमादसौ प्रतिपतति । चतुर्वारं भवत्या-संसारमेषा श्रेणिः ॥

क्षपकश्रेण्या कषायनिस्सत्तापादकं स्थानं क्षीण-मोहगुणस्थानम् । क्षपकश्रेणिश्चा भवमेकवारमेव भवति। एतदनंतरमेव सकलत्रैकालिकवस्तुस्वभाव-भासककेवलज्ञानावाप्तिः। आन्तर्मौहूर्त्तिकमिदम् ॥

योगत्रयवतः केवलज्ञानोत्पादकं स्थानं सयोगि-गुणस्थानम्। इदञ्चोत्कृष्टतो देशोनपूर्वकोटिप्रमाणम्। जघन्यतोऽन्तर्मुहूर्त्तम् ॥

योगप्रतिरोधिशैलेशीकरणप्रयोजकं स्थानमयो-गिगुणस्थानम्। आदिमह्रस्वपञ्चस्वरोच्चारणाधिकरण-कालमात्रमानमेतत् ॥

इति चतुर्दशगुणस्थानानि

उपयोगपूर्विका प्रवृत्तिः समितिः। सेर्याभाषैष-णाऽऽदाननिक्षेपोत्सर्गभेदेन पञ्चधा। स्वपरबाधापरि-हाराय युगमात्रनिरीक्षणपूर्वकं रत्नत्रयफलकं गमन-मीर्या। कर्कशादिदोषरहितहितमितानवद्यासंदिग्धा-भिद्रोहशून्यं भाषणं भाषा। सूत्रानुसारेणान्नादिपदा-र्थान्वेषणमेषणा। उपधिप्रभृतीनां निरीक्षणप्रमार्जन-पूर्वकग्रहणस्थापनात्मकक्रियाऽऽदाननिक्षेपणा। जन्तु-



शून्यपरिशोधितभूमौ विधिना मूत्रपुरीषादिपरित्य-जनमुत्सर्गः ॥

योगस्य सन्मार्गगमनोन्मार्गगमननिवारणा-भ्यामात्मसंरक्षणं गुप्तिः। सा च कायवाङ्मनोरूपेण त्रिधा। शयनाऽऽसननिक्षेपाऽऽदानचंक्रमणेषु चेष्टा-नियमः कायगुप्तिः। उपसर्गपरिषह्यभावाभावेऽपि शरीरे नैरपेक्ष्यं, योगनिरोद्धुस्सर्वथा चेष्टापरिहारोऽ-पि कायगुप्तिः ॥

अर्थवक्त्रविकारादिसंकेतहुंकारादिप्रवृत्तिरहितं शास्त्रविरुद्धभाषणशून्यं वचोनियमनं वाग्गुप्तिः। अनेन सर्वथा वाङ्निरोधस्सम्यग्भाषणञ्च लभ्यते, भाषासमितौ सम्यग्भाषणमेव ॥

सावद्यसंकल्पनिरोधो मनोगुप्तिः ॥

प्रतिबन्धकसमवधाने सत्यपि समभावादविच-लनं परीषहः। स च क्षुत्पिपासाशीतोष्णदंशावस्त्रार-तिवनिताचर्यानैषेधिकशय्याऽऽक्रोशवधयाचनाऽला-भरोगतृणस्पर्शमलसत्कारप्रज्ञाऽज्ञानसम्यक्त्वविष-यकत्वाद् द्वाविंशतिविधः ॥

सत्यामप्यतिशयितक्षुद्वेदनायां सविधिभक्ता-द्यलाभेऽपि क्षुधोपसहनं क्षुत्परीषहः। सत्यां पिपा-

सायामदुष्टजलाद्यलाभेऽपि तृट्परिसहनं पिपासापरीषहः । प्रचुरशीतबाधायामप्यत्यल्पैरेव वस्त्रादिभिः शीतोपसहनं शीतपरीषहः । प्रभूतोष्णसंतप्तोऽपि जलावगाहनाद्यसेवनमुष्णपरीषहः । समभावतो दंशमशकाद्युपद्रवसहनं दंशपरीषहः । एते वेदनीयक्षयोपशमजन्याः ॥

सदोषवस्त्रादिपरिहारेणाल्पमूल्याल्पवस्त्रादिभिर्वर्तनमवस्त्रपरीषहः । अप्रीतिप्रयोजकसंयोगसमवधाने सत्यपि समतावलम्बनमरतिपरीषहः । कामबुद्ध्या स्त्र्याद्यङ्गप्रत्यङ्गादिजन्यचेष्टानामवलोकनचिन्तनाभ्यां विरमणं स्त्रीपरीषहः । एते च चारित्रमोहनीयक्षयोपशमजन्याः ॥

एकत्र निवासममत्वपरिहारेण सनियमं ग्रामादिभ्रमणजन्यक्लेशादिसहनं चर्यापरीषहः । वेदनीयक्षयोपशमजन्योऽयम् ॥

स्त्रीपशुपण्डकवर्जिते स्थाने निवासादनुकूलप्रतिकूलोपसर्गसंभवेऽप्यविचलितमनस्कत्वं निषद्यापरीषहः । चारित्रमोहनीयक्षयोपशमजन्योऽयम् । प्रतिकूलसंस्तारकवसतिसेवनेऽनुद्विग्नमनस्कत्वं शय्यापरीषहः । अयश्च वेदनीयक्षयोपशमजन्यः । निर्मूलं समूलं वा स्वस्मिन् कुप्यत्सु जनेषु समतावलम्बनमाक्रोशपरीषहः, चारित्रमोहनीयक्षयोपशमजन्योऽयम् ॥



परप्रयुक्तताडनतर्जनादीनां कायविनश्वरत्वविभावनया सहनं वधपरीषहः, वेदनीयक्षयोपशमजन्योऽयम् । स्वधर्मदेहपालनार्थं चक्रवर्तिनोऽपि साधोर्याचनालज्जापरिहारो याचनापरीषहः, चारित्रमोहनीयक्षयोपशमजन्योऽयम् ॥

याचितेऽपि वस्तुन्यप्राप्तौ विषादानवलम्बनमलाभपरीषहः, लाभान्तरायक्षयोपशमजन्योऽयम् । रोगोद्भवे सत्यपि सम्यक् सहनं रोगपरीषहः । जीर्णशीर्णसंस्तारकाधस्तनतीक्ष्णतृणानां कठोरस्पर्शजन्यक्लेशसहनं तृणस्पर्शपरीषहः । शरीरनिष्ठमलापनयनानभिलाषा मलपरीषहः । वेदनीयक्षयोपशमजन्या एते । भक्तजनानुष्ठितातिसत्कारेऽपि गर्वपराङ्मुखत्वं सत्कारपरीषहः, अयश्च चारित्रमोहनीयक्षयोपशमजन्यः । बुद्धिकुशलत्वेऽपि मानापरिग्रहः प्रज्ञापरीषहः, ज्ञानावरणक्षयोपशमजन्यः । बुद्धिशून्यत्वेऽप्यखिन्नत्वमज्ञानपरीषहः, ज्ञानावरणक्षयोपशमजन्यः । इतरदर्शनचमत्कारदर्शनेऽपि स्वदेवतासान्निध्याभावेऽपि जैनधर्मश्रद्धातोऽविचलनं सम्यक्त्वपरीषहः, दर्शनमोहनीयक्षयक्षयोपशमजन्योऽयम् ॥

मोक्षमार्गानुकूलयतिप्रयत्नो यतिधर्मः । स च क्षान्तिमार्दवार्जवनिर्लोभतातपस्संयमसत्यशौचा—

किश्चन्यब्रह्मचर्यभेदाद्दशविधः । एतल्लक्षणान्यग्रे वक्ष्यन्ते ॥

मोक्षप्रवृत्त्युत्तेजकं चिन्तनं भावना। अनित्याशरणसंसारैकत्वान्यत्वाशुचित्वाश्रवसंवरनिर्जरालोकस्वभावबोधिदुर्लभधर्मस्वाख्यातभेदाद्द्वादशधा सा। एतल्लक्षणान्यप्यग्रे वक्ष्यन्ते ॥

कर्माष्टकशून्यताप्रयोजकमनुष्ठानं चारित्रम् । तच्च सामायिकच्छेदोपस्थापनपरिहारविशुद्धिसूक्ष्मसंपराययथाख्यातभेदेन पञ्चविधम् ॥

छेदोपस्थापनादिचतुष्टयभिन्ना सर्वसावद्ययोगविरतिः सामायिकम्। तद् द्विविधम्। इत्वरकालं यावज्जीवकालश्चेति । भाविव्यपदेशयोग्यं स्वल्पकालं चारित्रमित्वरकालम् । प्रथमान्तिमतीर्थकरतीर्थयोरेवैतत । भाविव्यपदेशान्तराभाववत् सामायिकं यावज्जीवकालम् । इदश्च मध्यमद्वाविंशतीर्थकरतीर्थान्तर्गतसाधूनां विदेहक्षेत्रवर्त्तिनाश्च ॥

पूर्वपर्यायोच्छेदे सत्युत्तरपर्यायारोपणयोग्यं चारित्रं छेदोपस्थापनीयम्। तच्च निरतिचारसातिचारभेदेन द्विविधम्। शैक्षकादेरधीतविशिष्टाध्ययनविदो यदारोप्यते तन्निरतिचारम् । खण्डितमूलगुणस्य पुनर्व्रतारोपणं सातिचारम् । उभयमपि प्रथमान्तिमतीर्थकरतीर्थकाल एव ॥



तपोविशेषविशिष्टं परिशुद्धिमच्चारित्रं परिहारविशुद्धिकम्। तदपि निर्विशमानकं निर्विष्टकायिकश्चेति द्विविधम्। निर्विशमानकाः प्रक्रान्तचारित्रोपभोक्तारः, निर्विष्टकायिकाश्च समुपभुक्तप्रक्रान्तचारित्रकायिकाः। एते चाद्यान्तिमतीर्थकरतीर्थकाल एव॥

अत्यन्तकृशकषायवच्चारित्रं सूक्ष्मसंपरायः । अयं संक्लिश्यमानको विशुद्ध्यमानकश्चेति द्विप्रकारः। उपशमश्रेणीतः प्रपततः प्रथमः। द्वितीयस्तु श्रेणिमारोहतः ॥

निष्कषायं चारित्रं यथाख्यातम्। इदमप्युपशमश्रेणिमुपयातस्य कषायाणामुपशमादनुदयाच्चान्तर्मुहूर्त्तस्थितिकम् । क्षपकश्रेणिमधिगतस्य तु कषायाणां सर्वथा क्षयाज्जघन्यतोऽन्तर्मुहूर्त्तस्थितिकालीनमुत्कृष्टतश्च देशोनपूर्वकोटिप्रमाणं बोध्यम्। आद्यं प्रतिपाति, द्वितीयमप्रतिपाति ॥

तत्र द्वाराणि–प्रज्ञापनावेदरागकल्पचारित्रप्रतिसेवनाज्ञानतीर्थलिङ्गशरीरक्षेत्रकालगतिसंयमसन्निकर्षयोगोपयोगकषायलेश्यापरिणामबन्धवेदनोदीरणोपसम्पद्धानसंज्ञाहारभवाकर्षकालमानान्तरसमुद्घातक्षेत्रस्पर्शनाभावपरिणामाल्पबहुत्वेभ्यः षट्त्रिंशद्विधानि ॥

तत्र प्रज्ञापनाद्वारे सामायिकसंयत इत्वरिको यावत्कथिकश्चेति द्विविधः। छेदोपस्थापनीयस्सातिचारी निरतिचारी चेति द्विविधः। परिहारविशुद्धिको निर्विशमानो निर्विष्टकायिकश्चेति द्विविधः। सूक्ष्मसंपरायसंयत उपशमश्रेणीतः प्रच्यवमानः उपशमक्षपकश्रेण्यन्यतरारूढश्चेति द्विविधः। यथाख्यातोऽपि छद्मस्थः केवली चेति द्विविध इति बोध्यम् ॥

वेदद्वारे-सामायिको नवमगुणस्थानावधि वेदको वेदत्रयवांश्च। नवमान्ते तूपशमात् क्षयाद्वा वेदानामवेदकोऽपि भवेत्। एवं छेदोपस्थापनीयोऽपि। परिहारिकः पुरुषवेदो वा पुंनपुंसकवेदो वा स्यात्। सूक्ष्मसंपरायो यथाख्यातश्चावेदक एवेति ॥

रागद्वारे-सामायिकादिचत्वारस्संयतास्सरागा एव, यथाख्यातसंयतस्त्ववराग एवेति।

कल्पद्वारे सामायिकसूक्ष्मसंपराययथाख्याताः स्थितकल्पेऽस्थितकल्पे च छेदोपस्थापनीयः स्थितकल्प एव भवेत् परिहारविशुद्धिकोऽपीदृश एव भवेत्। अस्थितकल्पो मध्यमतीर्थकरतीर्थेषु विदेहे चेति ॥

अथवा सामायिको जिनकल्पस्थविरकल्पकल्पातीतेषु भवेत्। छेदोपस्थापनीयपरिहारविशुद्धिकौ न



कल्पातीते। सूक्ष्मसंपराययथाख्यातौ तु कल्पातीत एव स्याताम् ॥

चारित्रद्वारे-सामायिकः पुलाको बकुशः कषायकुशीलो वा स्यात्। एवं छेदोपस्थापनीयोऽपि। परिहारविशुद्धिकसूक्ष्मसंपरायौ कषायकुशीलावेव यथाख्यातस्तु निर्ग्रन्थः स्नातको वेति ॥

प्रतिसेवनाद्वारे-सामायिकछेदोपस्थापनीयौ मूलोत्तरगुणप्रतिसेवकावप्रतिसेवकौ च भवतः। परिहारविशुद्धिकोऽप्रतिसेवकः। एवं सूक्ष्मसंपराययथाख्यातावपि विज्ञेयाविति ॥

ज्ञानद्वारे-सामायिकादिचतुर्णां द्वे वा त्रीणि वा चत्वारि वा ज्ञानानि भवन्ति। यथाख्यातस्य एकादशद्वादशगुणस्थानयोश्चत्वारि ज्ञानानि, ऊर्ध्वगुणस्थानयोः केवलज्ञानं भवतीति ॥

श्रुतद्वारे-सामायिकछेदोपस्थापनीययोर्जघन्यतोऽष्टौ प्रवचनमातर उत्कर्षतस्तु यावच्चतुर्दशपूर्वं श्रुतं। परिहारविशुद्धस्य जघन्यतो नवमपूर्वस्य आचारवस्तु, उत्कृष्टतस्त्वपूर्णदशपूर्वं यावत्। सूक्ष्मसांपरायिकस्य तु सामायिकस्येव। यथाख्यातस्य निर्ग्रंथस्य सामायिकस्येव। स्नातकस्य श्रुतं नास्तीति ॥

तीर्थद्वारे–तीर्थेऽप्यतीर्थेऽपि सामायिको भवेत्। अतीर्थे तु तीर्थंकरः प्रत्येकबुद्धश्च स्यात्। छेदोपस्थापनीयपरिहारविशुद्धिकौ तीर्थ एव। सूक्ष्मसंपराय यथाख्यातौ सामायिक इवेति ॥

लिङ्गद्वारे–सामायिकछेदोपस्थापनीयसूक्ष्मसम्परायथाख्याताः द्रव्यतः स्वलिङ्गेऽन्यलिङ्गे गृहिलिङ्गेऽपि। भावतस्तु स्वलिङ्ग एव भवेयुः। परिहारविशुद्धिकस्तु द्रव्यतो भावतश्च स्वलिङ्ग एवेति ॥

शरीरद्वारे-सामायिकछेदोपस्थापनीययोरौदारिकतैजसकार्मणानि औदारिकतैजसकार्मणवैक्रियाणि औदारिकवैक्रियाहारकतैजसकार्मणानि वा शरीराणि भवन्ति। शेषाणान्त्वौदारिकतैजसकार्मणानीति ॥

क्षेत्रद्वारे–जन्मसद्भावावाश्रित्य सामायिकछेदोपस्थापनीयसूक्ष्मसंपराययथाख्याताः कर्मभूम्यां संहरणापेक्षया अकर्मभूमौ भवेयुः। परिहारविशुद्धिकस्तु कर्मभूमावेव भवेत्। नास्य संहरणं भवेदिति ॥

कालद्वारे–सामायिकः उत्सर्पिण्यामवसर्पिण्यां नोउत्सर्पिण्यवसर्पिण्यामपि काले स्यात्। तत्र यद्युत्सर्पिण्यां स्यात्तदा जन्मतः दुःषमादुःषमसुषमासुषमदुःषमारूपे आरकत्रये, सद्भावतस्तृतीयतुर्ययोः, संहरणतो यत्र क्वापि स्यात्। यद्यवसर्पिण्यां



तदा जन्मसद्भावाभ्यां तृतीयचतुर्थपञ्चमेषु पूर्वक्रमविपरीतेष्वारकेषु, संहरणतस्सर्वासु स्यात्। यदि नोउत्सर्पिण्यवसर्पिण्यां तदा महाविदेह दुःषमसुषमासदृश्यारके स्यात्। एवं छेदोपस्थापनीयोऽपि, परन्तु जन्मसद्भावापेक्षया नोउत्सर्पिण्यवसर्पिण्यां न स्यात्।

परिहारविशुद्धिसंयतः उत्सर्पिण्यवसर्पिण्योः काले स्यान्नतु नोउत्सर्पिण्यवसर्पिणीकाले। उत्सर्पिण्यवसर्पिण्योः यथायोगं द्वितीयतृतीयचतुर्थपञ्चमारकेषु ॥

सूक्ष्मसंपरायो जन्मसद्भावाभ्यां कालत्रये आरकमाश्रित्य तु सामायिकवत्स्यात्। यथाख्यातोऽप्येवं संहरणतस्तु सर्वेष्वारकेषु॥ रूपरसाद्युत्कर्षप्रयोजकः काल उत्सर्पिणी। रूपरसादिहानिप्रयोजकः कालोऽवसर्पिणी। तत्रावसर्पिण्यां सुषमसुषमासुषमासुषमदुष्षमादुष्षमसुषमादुष्षमादुष्षमदुष्षमारूपाः षडारका भवन्ति। उत्सर्पिण्यां व्युत्क्रमतः षडारकास्त एव ॥

गतिद्वारे–सामायिकछेदोपस्थापनीयौ मृत्वा देवगतिं यायात्। तत्रापि वैमानिक एव। तत्रापि जघन्यतः प्रथमदेवलोकमुत्कृष्टतस्त्वनुत्तरविमानं यायात्। विराधकश्चेद्यः कोऽपि भवनपतिः स्यात् ॥

परिहारविशुद्धिको वैमानिक एव स्यात्। तत्रापि जघन्यतः सौधर्मकल्प उत्कृष्टतः सहस्रारकल्पे स्यात्। सूक्ष्मसंपरायः अनुत्तरविमाने स्यात् ॥

यथाख्यातसंयतो देवगतौ स्याच्चेत् तदानुत्तरविमान एव स्यात् अथवा सिद्धिगतिं यायादिति।

तत्र सुधर्मैशानसनत्कुमारमाहेन्द्रब्रह्मलान्तकमहाशुक्रसहस्रारानतप्राणतारणाच्युतभेदेन द्वादशविधा देवलोकाः कल्पोपपन्नदेवानाम्। तदुपरि सुदर्शनसुप्रतिबद्धमनोरमसर्वभद्रविशालसुमनससौमनसप्रीतिकरादित्यभेदेन नवग्रैवेयकाः। तदुपरि विजयवैजयन्तजयन्तापराजितसर्वार्थसिद्धभेदेन पञ्चानुत्तराः। उभये कल्पातीतानाम् ॥

चन्द्रसूर्यग्रहनक्षत्रतारकाः पञ्च ज्योतिष्काः। पिशाचभूतयक्षराक्षसकिंनरकिम्पुरुषमहोरगगन्धर्वा अष्टविधा व्यन्तराः। असुरनागसुवर्णविद्युदग्निद्वीपोदधिदिक्पवनस्तनितकुमारभेदेन दशविधा भवनपतयः ॥

संयमस्थानद्वारे–सामायिकछेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायाणां प्रत्येकं संयमस्थानान्यसंख्यातानि। यथाख्यातस्य त्वेकमेव संयमस्थानमिति ॥



सन्निकर्षद्वारे–सामायिकसंयतस्य चारित्रपर्याया अनन्ताः। एवं यथाख्यातपर्यन्तानां सर्वेषां बोध्याः। सामायिकस्सामायिकान्तराद्धीनः समानोऽधिकोऽपि स्यात्। हीनाधिकत्वे च षट्स्थानपतितत्वं स्यात्। एवं छेदोपस्थापनीयपरिहारविशुद्धिकापेक्षयापीत्थमेव भाव्यम्। सूक्ष्मसम्परायिकयथाख्यातापेक्षया तु अनन्तगुणहीनचारित्रपर्यायवान्स्यात् ॥

छेदोपस्थापनीय आद्यत्रयचारित्र्यपेक्षया सामायिकवत् स्यात्। अन्त्यद्वयापेक्षयापि तथैव। एवमेव परिहारविशुद्धिकोऽपि ॥

सूक्ष्मसम्पराय आद्यत्रयापेक्षयानन्तगुणाधिक एव। सूक्ष्मसम्परायान्तरापेक्षया तुल्योऽनन्तगुणेन हीनोऽधिकोपि स्यात् ॥ यथाख्यातापेक्षयानन्तगुणहीनः ॥

यथाख्यातस्तु विजातीयसंयतापेक्षयानन्तगुणेनाधिक एव। सजातीयापेक्षया तु तुल्य एवेति ॥

योगद्वारे–आद्यचत्वारस्संयताः योगत्रयवन्तः। यथाख्यातस्तु सयोगी अयोगी चेति ॥

उपयोगद्वारे–आद्यास्त्रयो यथाख्याताश्च साकारनिराकारोपयोगवन्तः स्यात् सूक्ष्मसम्परायस्तु साकारोपयोग्यवेति ॥

कषायद्वारे–सामायिकस्सकषाय एव। छेदोपस्थापनीयोप्येवम्। परन्तु श्रेणिगतयोस्तु प्रथमं चत्वारः कषायाः, ततः क्रोधादिषु क्रमेण प्रथमादीन् विहाय त्रयो द्वावेको वा स्यात्। परिहारविशुद्धिकस्तु सकषाय एव श्रेणिप्राप्त्यभावात्। सूक्ष्मसम्परायस्संज्वलनलोभकषायवान्। यथाख्यातस्त्वकषायीति॥

लेश्याद्वारे-सामायिकछेदोपस्थापनीयौ षड्विधलेश्यावन्तौ। परिहारविशुद्धिकश्शुभलेश्यात्रयवान्। सूक्ष्मसम्परायश्शुक्लमात्रलेश्यावान्। यथाख्यातस्तु परमशुक्ललेश्यावान् चतुर्दशगुणस्थाने तु लेश्यारहित इति॥

परिणामद्वारे–सामायिकछेदोपस्थापनीयपरिहारविशुद्धिका वर्धमानहीयमानस्थिरपरिणामवन्तः। सूक्ष्मसम्परायः श्रेण्यां वर्धमानो हीयमानश्च स्यात् न स्थिरपरिणामवान्। तत्कालस्तु जघन्यतस्समय एकः उत्कृष्टतोऽन्तर्मुहूर्त्तपरिमाणः। एवमाद्यानां कालो ज्ञेयः। यथाख्यातस्तु न हीयमानपरिणामवान्। वर्धमानपरिमाणकालस्तु जघन्यतः उत्कृष्टतश्चान्तर्मुहूर्त्तमानमिति। स्थितिस्तु जघन्येनैकः समयः। उत्कृष्टतस्त्रयोदशगुणस्थानस्थस्य किञ्चिदूनपूर्वकोटिपर्यन्ता बोध्येति॥



बन्धद्वारे–सामायिकादयस्त्रयः अष्टौ कर्मप्रकृतीः आयुर्वर्जसप्तकर्मप्रकृतीर्वा बध्नन्ति। सूक्ष्मसम्परायो मोहनीयायुर्वर्जषट्कर्मप्रकृतीर्बध्नाति। यथाख्यातस्तु एकादशद्वादशत्रयोदशगुणस्थानेषु वेदनीयमेव बध्नाति। चतुर्दशे तु बन्धरहित एवेति॥

वेदनाद्वारे–सामायिकाद्याश्चत्वारोऽष्टौ कर्मप्रकृतीरनुभवन्ति। यथाख्यातस्तु निर्ग्रन्थावस्थायां मोहवर्जसप्तकर्मप्रकृतीनां वेदको मोहनीयस्योपशान्तत्वात् क्षीणत्वाद्वा। स्नातकावस्थायां घातिकर्मप्रकृतिक्षयाच्चतसृणां वेदक इति॥

उदीरणाद्वारे–सामायिकछेदोपस्थापनीयपरिहारविशुद्धिका अष्टौ सप्त षड्वा कर्मप्रकृतीरुदीरयन्ति। सूक्ष्मसम्पराय आयुर्वेदनीयवर्जषट्कर्मप्रकृतीरायुर्वेदनीयमोहनीयवर्जपञ्चकर्मप्रकृतीर्वोदीरयति। यथाख्यातस्तु द्वे वा पञ्च वा कर्मप्रकृतीरुदीरयति चतुर्दशगुणस्थाने त्वनुदीरक इति॥

उपसम्पद्धानद्वारे–सामायिकस्सामायिकत्वं त्यजन् छेदोपस्थापनीयत्वं सूक्ष्मसम्परायत्वं असंयतत्वं वा प्राप्नुयात्। छेदोपस्थापनीयश्छेदोपस्थापनीयत्वं त्यजन् सामायिकत्वं परिहारविशुद्धिकत्वं सूक्ष्मसम्परायत्वं असंयतत्वं वा प्राप्नुयात्। परिहारवि-

शुद्धिकः परिहारविशुद्धिकत्वं त्यजन् पुनर्गच्छाद्या-श्रयणाच्छेदोपस्थापनीयत्वं देवत्वोत्पत्तावसंयतत्वं वा भजेत् । सूक्ष्मसम्परायस्तत्त्वं श्रेणीप्रतिपातेन त्यजन् पूर्वं सामायिकश्चेत्तत्त्वं छेदोपस्थापनीयश्चेत्त-त्वं श्रेणीसमारोहणतो यथाख्यातत्वं वा यायात् यथाख्यातसंयतस्तु तत्त्वं त्यजन् श्रेणीप्रतिपाततो सूक्ष्मसम्परायत्वं असंयमं वा प्रतिपद्यते, उपशान्त-मोहत्वे मरणाद्देवोत्पत्तिं, स्नातकत्वे तु सिद्धिगतिं प्रतिपद्यत इति ॥

संज्ञाद्वारे-सामायिकछेदोपस्थापनीयपरिहारवि-शुद्धिकाः संज्ञोपयुक्ता नोसंज्ञोपयुक्ता भवन्ति, संज्ञोपयुक्ता आहारादिष्वासक्ताः, नोसंज्ञोपयुक्ता आहारादिष्वासक्तिरहिताः । सूक्ष्मसम्परायपयथा-ख्यातौ तु आहारादिकर्तृत्वेऽपि नोसंज्ञोपयुक्तौ स्यातामिति ॥

आहारकद्वारे-सामायिकाश्चत्वार आहारका एव । यथाख्यातस्त्रयोदशगुणस्थानं यावदाहारकः, चतुर्दशगुणस्थाने केवलिसमुद्घाततृतीयचतुर्थपञ्चम-समयेष्वनाहारक इति ॥

भवद्वारे-सामायिको जघन्यत एकं भवमुत्कृष्टत अष्टौ भवान् गृह्णीयात् । एवं छेदोपस्थापनीयोऽपि । परिहारविशुद्धिको जघन्यत एकमुत्कृष्टतस्त्रीन् । एवं यथाख्यातं यावदिति ॥



आकर्षद्वारे-सामायिक एकभवमाश्रित्य जघ-न्यत एकवारमुत्कृष्टतश्शतपृथक्त्ववारं सामायिक-संयतत्वं प्राप्नोति । छेदोपस्थापनीयो जघन्यत ए-कवारमुत्कृष्टतो विंशतिपृथक्त्ववारं छेदोपस्थाप-नीयत्वं प्राप्नुयात् । परिहारविशुद्धिको जघन्यत एकवारमुत्कृष्टतस्त्रिवारं प्राप्नुयात् । सूक्ष्मसम्परायो जघन्यत एकवारमुत्कृष्टतश्चतुरो वारान् प्रतिपद्यते यथाख्यातस्तु जघन्यत एकवारमुत्कृष्टतो द्विवारं यथाख्यातत्वं प्राप्नुयादिति ॥

अनेकभवाश्रयेण सामायिकस्य जघन्यतो द्विवारं उत्कृष्टतस्सहस्रपृथक्त्वं आकर्षा भवन्ति । छेदोपस्था-पनीयस्य जघन्यतो द्विवारमुत्कृष्टतो नवशतादूर्ध्वं सहस्रावधि आकर्षा भवन्ति । परिहारविशुद्धिकस्य जघन्यतो द्विवारमुत्कृष्टतस्सप्ताकर्षाः, सूक्ष्मसम्परा-यस्य जघन्यतो द्विवारमुत्कृष्टतो नवाकर्षाः यथा-ख्यातस्य जघन्यतो द्विवारमुत्कृष्टतः पञ्चाकर्षा भवन्तीति ॥

कालमानद्वारे-सामायिकस्य संयमकालमानं ज-घन्येनैकस्समयः । उत्कृष्टतो देशोननववर्षन्यूनपूर्व-

कोटिं यावत्। एवमेव छेदोपस्थापनीयस्य। परिहारविशुद्धिकस्य जघन्येनैकस्समयः। उत्कृष्टत एकोनत्रिंशद्वर्षन्यूनकोटिं यावत्। सूक्ष्मसम्परायस्य जघन्येनैकस्समयः। उत्कृष्टतोऽन्तर्मुहूर्त्तम्। यथाख्यातस्य तु सामायिकस्येव स्यादिति ॥

अनेकजीवापेक्षया तु सामायिकास्सर्वदा भवेयुः। छेदोपस्थापनीया जघन्यतस्सार्धद्विशतवर्षपर्यन्तमुत्कृष्टतः पञ्चाशल्लक्षकोटिसागरोपमं यावत्स्युः। परिहारविशुद्धिका जघन्येन किञ्चिदूनद्विशतवर्षकालमुत्कृष्टतः किञ्चिदूनद्विपूर्वकोटिवर्षकालपर्यन्तं स्युः ॥

अन्तरद्वारे-एकस्य संयमग्रहणानन्तरमन्यस्य संयमग्रहणे जघन्यत एकस्समयः उत्कृष्टतस्संख्यातवर्षाण्यन्तरकालः। एवं यथाख्यातपर्यन्तं बोध्यः ॥

सामायिकैश्शून्यः कालो नास्त्येव। छेदोपस्थापनीयैश्शून्यः कालो जघन्येन त्रिषष्ठिसहस्रवर्षाण्युत्कृष्टतोऽष्टादशकोटाकोटिसागरोपमः। परिहारविशुद्धिरहितः कालो जघन्येन चतुरशीतिसहस्रवर्षाण्युत्कृष्टतोऽष्टादशकोटाकोटिसागरोपमः। सूक्ष्मसम्परायरहितः कालो जघन्येनैकः समयः उत्कृष्टतष्षण्मासाः। यथाख्यातरहितः कालो नास्त्येव ॥

समुद्घातद्वारे-सामायिकछेदोपस्थापनीययो-



र्वेदनाकषायमरणवैक्रियतैजसाहारकाष्षट् समुद्घाताः भवन्ति। परिहारविशुद्धिकस्य वेदनाकषायमरणात्मकास्त्रयः। सूक्ष्मसम्परायस्य न कोऽपि। यथाख्यातस्य तु केवलिसमुद्घात एव भवेदिति ॥

क्षेत्रद्वारे-सामायिकछेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्पराया लोकस्यासंख्यातभागे स्युः। यथाख्यातस्तु असंख्यातभागे, असंख्यातभागेषु केवलिसमुद्घातापेक्षया सर्वलोकव्यापकश्च स्यादिति ॥

स्पर्शनाद्वारे-सामायिकादयो यावत्सु भागेषु लोकस्य स्युस्ते तावन्तो भागान् स्पृशेयुः। समीपतरवर्तिपार्श्वभागस्पर्शनेन किञ्चिदधिकानपीति ॥

भावद्वारे-सामायिकाश्चत्वारः क्षायोपशमिकभावे स्युः। यथाख्यातस्तु औपशमिके क्षायिके च स्यादिति ॥

परिमाणद्वारे-सामायिकाः प्रतिपद्यमानापेक्षयैकस्मिन् काले कदाचिद्भवेयुः कदाचिच्च न। यदा भवेयुस्तदा जघन्येनैको द्वौ त्रयो वा, उत्कृष्टतो द्विसहस्रात् यावन्नवसहस्रम्। पूर्वप्रतिपन्नापेक्षया जघन्यत उत्कृष्टतश्च द्विसहस्रकोटीतो यावन्नवसहस्रकोटि भवेयुः ॥

छेदोपस्थापनीयास्तु प्रतिपद्यमानापेक्षया कदा-

पि स्युः कदापि न । यदा स्युस्तदा जघन्येनैको द्वौ त्रयो वोत्कृष्टतो द्विशताद्यावन्नवशतम् । प्रतिपन्नापेक्षया तु क्वचिन्न स्युः क्वचिच्च जघन्येनोत्कृष्टतश्च द्विशताद्यावन्नवशतकोटि स्युः ॥

परिहारविशुद्धिका अप्येवमेव किन्तु प्रतिपन्नापेक्षया जघन्येनैको द्वौ त्रयः, उत्कर्षेण च द्विसहस्रात् यावन्नवसहस्रं स्युः ॥

सूक्ष्मसम्परायश्च क्वचिन्न स्युः क्वचिच्च जघन्येनैको द्वौ त्रयः । उत्कृष्टतः क्षपकश्रेण्यां अष्टोत्तरशतं उपशमश्रेण्यां चतुःपञ्चाशत्स्युः । प्रतिपन्नापेक्षया क्वचिन्न स्युः क्वचिच्च जघन्येनैको द्वौ त्रयः । उत्कृष्टतो द्विशतान्नवशतं यावत् स्युः ॥

यथाख्यातास्तु सूक्ष्मसंपरायवत् । प्रतिपन्नापेक्षया तु जघन्येनोत्कृष्टतश्च द्विकोटीतो यावन्नवकोटि भवेयुरिति ॥

अल्पबहुत्वद्वारे–पञ्चसु संयतेषु सर्वेभ्योऽल्पाः सूक्ष्मसम्परायाः । तेभ्यः परिहारविशुद्धिकाः संख्यातगुणाः । तेभ्यो यथाख्याताः संख्यातगुणाः तेभ्योऽपि छेदोपस्थापनीयास्संख्यातगुणाः, तेभ्योऽपि च सामायिकास्संख्यातगुणा बोध्या इति ॥

इति षट्त्रिंशद्द्वाराणि

॥ इति संवरतत्त्वम् ॥



क्रमेण बद्धकर्मपुद्गलानां तपोविपाकान्यतरेण विध्वंसो निर्जरा । विध्वंसोऽयं विपाकोदयेन प्रदेशोदयेन च द्विधा भवति । विपाकोदयश्च मिथ्यात्वादिहेतुककर्मपुद्गलानां जघन्योत्कृष्टस्थितितीव्रमन्दानुभावानां स्वभावेन करणविशेषेण वोदयावलिकाप्रविष्टानां रसोदयपूर्वकानुभवनम् । अनुदयप्राप्तकर्मप्रकृतिकर्मदलिकं उदयप्राप्तसमानकालीनसजातीयप्रकृतौ संक्रमय्यानुभवनं प्रदेशानुभवः ॥

सेयं सकामाकामभेदाभ्यां द्विधा । सम्यग्दृष्टिदेशविरतसर्वविरतानां साभिलाषं कर्मक्षयाय कृतप्रयत्नानां यः कर्मणां विध्वंसः सा सकामा । मिथ्यादृष्टीनां ऐहिकसुखाय कृतप्रयत्नानां तपस्यादिना कर्मणां विध्वंसोऽकामा । आत्मप्रदेशेभ्यः कर्मणां निर्जरणं द्रव्यनिर्जरा । निर्जरानिमित्तशुभाध्यवसायो भावनिर्जरा ॥

शरीरवृत्तिरसादिधातुकर्मान्यतरसन्तपनं तपः । तत्र बाह्यतपांसि अनशनोनोदरिकावृत्तिसंक्षेपरसत्यागकायक्लेशसंलीनतारूपेण षड्विधानि ॥

इत्वरं यावज्जीवं वाऽऽहारपरित्यागोऽनशनम् । स्वाहारपरिमाणादल्पाहारपरिग्रहणमूनोदरिका । नानाविधाभिग्रहधारणेन भिक्षावृत्तेः प्रतिरोधनं

वृत्तिसंक्षेपः। रसवत्पदार्थेषु द्वित्र्यादीनां त्यागपुरस्सरं विरसरूक्षाद्याहारग्रहणं रसत्यागः । केशोल्लुञ्चनादिक्लेशसहनं कायक्लेशः। इन्द्रिययोगकषायादीन्नियम्य विविक्तस्थानासेवनं संलीनता। सा चतुर्विधा। इन्द्रियकषाययोगविविक्तचर्याभेदात्। प्राप्तेन्द्रियविषयेष्वरक्तद्विष्टताभाव इन्द्रियसंलीनता। अनुदितक्रोधस्योदयनिरोधः प्राप्तोदयस्य नैष्फल्यकरणं कषायसंलीनता। कुशलाकुशलयोगानां प्रवृत्तिनिवृत्ती योगसंलीनता। शून्यागारादौ निर्बाधे स्त्र्यादिवर्जिते स्थाने स्थितिर्विविक्तचर्यासंलीनता ॥

प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायध्यानोत्सर्गाः षडाभ्यन्तरतपांसि ॥

अतिचारविशुद्धिजनकानुष्ठानं प्रायश्चित्तम् । तच्च आलोचनप्रतिक्रमणमिश्रविवेकव्युत्सर्गतपश्छेदमूलानवस्थाप्यपाराञ्चितभेदाद्दशविधम् ॥

गुर्वभिमुखं समर्यादं स्वापराधप्रकटनमालोचनम्। अतिचारात्प्रतिनिवर्तनं प्रतिक्रमणम्। उभयात्मकं मिश्रम्। गृहीतवस्तुनोऽवगतदोषत्वे परित्यजनं विवेकः। गमनागमनादिषु विशिष्टचित्तैकाग्र्यपूर्वकं योगव्यापारपरित्यागो व्युत्सर्गः। छेदग्रन्थजितकल्पान्यतरानुसारेण गुर्वनुशिष्टानुष्ठानविशेषस्तपः। तपसा दुर्भेद्यस्य दिवसमासादिक्रमेण श्रमणपर्यायापनयनं छेदः। प्रारम्भतः पुनर्महाव्रतारोपणं मूलम्। अकृततपोविशेषस्य दुष्टतरस्य कियत्कालं व्रतानारोपणमनवस्थाप्यम्। राजवधादितीर्थकराद्याशातनाकरणेन यावद् द्वादशवर्षमतिचारपारगमनतो राजप्रतिबोधादिप्रवचनप्रभावनया पुनः प्रव्राजनं पाराञ्चितम् ॥



ज्ञानदर्शनचारित्रोपचारान्यतमो विनयः। तत्र नम्रतापूर्वकं ज्ञानाभ्यासो ज्ञानविनयः। जिनेन्द्रोक्तपदार्थेषु निश्शङ्कितत्वं दर्शनविनयः। श्रद्धयानुष्ठानेन च चारित्रप्ररूपणं चारित्रविनयः। गुणाधिकेषु अभ्युत्थानाद्यनुष्ठानमुपचारविनयः ॥

प्रभुसिद्धान्तोदितसेवाद्यनुष्ठानप्रवृत्तिमत्त्वं वैयावृत्यम् । तच्चाचार्योपाध्यायतपस्विशैक्षकग्लानकुलगणसंघसाधुसमनोज्ञभेदाद्दशविधम् । एतल्लक्षणान्यग्रे वक्ष्यन्ते ॥

कालादिमर्यादयाध्ययनं स्वाध्यायः । चेतसो योगनिरोधपूर्वकैकविषयस्थैर्यतापादनं ध्यानम्। योगनिरोधः केवलिनां ध्यानम् । तदार्त्तरौद्रधर्मशुक्लभेदेन चतुर्विधम् ॥

इष्टानिष्टवियोगसंयोगरोगतन्निदानान्यतमविष-

यकं सोद्वेगचिन्तनमार्त्तम् । षष्ठगुणस्थानं यावदिदं भवति । हिंसाऽसत्यस्तेयसंरक्षणान्यतमानुबन्धिचिन्तनं रौद्रम् । आपञ्चममेतत् । आज्ञापायविपाकसंस्थानान्यतमविषयकं पर्यालोचनं धर्मध्यानम् । अप्रमत्ततः क्षीणमोहं यावत् । आज्ञाद्यविषयकं निर्मलं प्रणिधानं शुक्लम् । तच्च पृथक्त्ववितर्कैकत्ववितर्कसूक्ष्मक्रियव्युपरतक्रियभेदेन चतुर्विधम् । पूर्वविदां पूर्वश्रुतानुसारतोऽन्येषां तमन्तरेणार्थव्यञ्जनयोगान्तरसंक्रान्तिसहितमेकद्रव्य उत्पादादिपर्यायाणामनेकनयैरनुचिन्तनं पृथक्त्ववितर्कम् । इदं सविचारम् । पूर्वविदां पूर्वश्रुतानुसारेणान्येषां तद्भिन्नश्रुतानुसारेणार्थव्यञ्जनसंक्रान्तिरहितमेकद्रव्ये एकपर्यायविषयानुचिन्तनमेकत्ववितर्कम् । इदन्त्वविचारम् । सूक्ष्मकायक्रियाप्रतिरुद्धसूक्ष्मवाङ्मनःक्रियस्य सूक्ष्मपरिस्पन्दात्मकक्रियावद्ध्यानं सूक्ष्मक्रियम् । इदमप्रतिपाति, प्रतिपाताभावात् । निरुद्धसूक्ष्मकायपरिस्पन्दात्मकक्रियस्य ध्यानं व्युपरतक्रियम् । इदमप्यप्रतिपाति । आद्ये द्वे एकादशद्वादशगुणस्थानयोरन्त्ये द्वे केवलिन एव त्रयोदशचतुर्दशगुणस्थानक्रमेण । अनेषणीयस्य संसक्तस्य वान्नादेः कायकषायाणाञ्च परित्यजनमुत्सर्गः ॥

इति निर्जरातत्त्वम्



आत्मप्रदेशैः शुभाशुभकर्मसम्बन्धो बन्धः । स च मिथ्यात्वाविरतिकषाययोगैर्यथायोगं समुत्पद्यते ॥

तत्रायथार्थश्रद्धानं मिथ्यात्वम् । तच्चाऽऽभिग्रहिकानाभिग्रहिकाऽऽभिनिवेशिकसांशयिकानाभोगिकभेदेन पञ्चविधम् ॥

कुदर्शने सद्दर्शनजन्यं श्रद्धानमाभिग्रहिकम् । सर्वदर्शनविशेष्यकसमत्वप्रकारकप्रतिपत्तिप्रयोजकं श्रद्धानमनाभिग्रहिकम् । तत्त्ववेत्तृत्वेऽप्यतदर्थेषु तदर्थताभिग्रह आभिनिवेशिकम् । अर्हत्तत्त्वधर्मिकसत्यत्वसंशयजनकं मिथ्यात्वं सांशयिकम् । दार्शनिकोपयोगशून्यजीवानां मिथ्यात्वमनाभोगिकम् ॥

हिंसाद्यव्रतेभ्यः करणैर्योगैश्चाविरमणमविरतिः । तस्याश्च मनःपञ्चेन्द्रियाणां स्वस्वविषयेभ्यः पृथिव्यप्तेजोवायुवनस्पतित्रसरूपषड्विधजीवहिंसातश्चाप्रतिनिवर्तनरूपत्वात् द्वादशविधत्वम् ॥

कषायः पूर्वोदितपञ्चविंशतिविधः । वेदत्रयहास्यषट्कात्मकनोकषायः कषायसहगामित्वात्कषायपदवाच्यः ॥

योगो मनोवाक्कायव्यापारः । तत्र सत्यासत्यमिश्रव्यवहारविषयकमनोवाग्व्यापारा अष्टौ, तथौदा-

रिकौदारिकमिश्रवैक्रियवैक्रियमिश्राऽऽहारकाऽऽहारकमिश्रकार्मणशरीरजन्यव्यापारास्सन्तेति पञ्चदशयोगाः ॥

रक्तद्विष्टात्मसम्बद्धानां कार्मणस्कन्धानां परिणामविशेषेण स्वस्वयोग्यकार्यव्यवस्थापनं प्रकृतिबन्धः। प्रविभक्तानां कर्मस्कन्धानां विशिष्टमर्यादया स्थितिकालनियमनं स्थितिबन्धः। परिपाकमुपयाता नां विशिष्टकर्मस्कन्धानां शुभाशुभविपाकानुभवनयोग्यावस्था रसबन्धः। प्रकृत्यादित्रयनिरपेक्षं दलिकसंख्याप्राधान्येन कर्मपुद्गलानां ग्रहणं प्रदेशबन्धः।

बन्धाश्चैते चत्वार एकविधाध्यवसायविशेषेण जायन्ते संक्रमोद्वर्तनादिकरणविशेषाश्च ॥

करणविशेषाश्च बन्धसंक्रमोद्वर्तनापवर्तनोदीरणोपशमनानिधत्तिनिकाचनाभेदादष्टविधाः ॥

तत्र बद्धात्मनो वीर्यपरिणामविशेषः करणम् । वीर्यश्चात्र योगकषायरूपं विवक्षितम् ॥

कर्मणामात्मप्रदेशैः सहान्योन्यानुगमनप्रयोजकवीर्यपरिणामो बन्धनकरणम् । अत्र योगात्मकवीर्येण प्रकृतिप्रदेशयोः कषायैश्च स्थित्यनुभागयोर्बन्धो जायते ॥



अन्यकर्मरूपतया व्यवस्थितानां प्रकृतिस्थित्यनुभागप्रदेशानामन्यकर्मरूपतया व्यवस्थापनहेतुर्वीर्यविशेषः संक्रमणम् ॥

कर्मस्थित्यनुभागयोः प्रभूतीकरणप्रयोजकवीर्यपरिणतिरुद्वर्तना ॥

कर्मस्थित्यनुभागयोर्ह्रस्वीकरणप्रयोजकवीर्यविशेषोऽपवर्तना ॥

अनुदितकर्मदलिकस्योदयावलिकाप्रवेशनिदानमात्मवीर्यमुदीरणा ॥

कर्मणामुदयोदीरणानिधत्तिनिकाचनाकरणायोग्यत्वेन व्यवस्थापनाहेतुर्वीर्यपरिणतिरुपशमना। उदयश्च यथास्थिति बद्धानां कर्मपुद्गलानामबाधाकालक्षयात्संक्रमापवर्तनादिकरणविशेषाद्वोदयसमयप्राप्तानामनुभवनम् ॥

कर्मणामुद्वर्तनापवर्तनान्यकरणायोग्यत्वेन व्यवस्थापनानुकूलवीर्यविशेषो निधत्तिः ॥

करणसामान्यायोग्यत्वेनावश्यवेद्यतया व्यवस्थापनाप्रयोजकवीर्यविशेषो निकाचना ॥

तत्र मूलप्रकृतिबन्धश्च ज्ञानदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रान्तरायभेदेनाष्टविधः । एषाम-

वान्तरभेदा विंशत्युत्तरशतात्मका बोध्याः। विवृता-श्चैते पुण्यपापतत्त्वयोः। उदये च सम्यक्त्वमोहनी-यमिश्रमोहनीयसहिता द्वाविंशत्युत्तरशतभेदा भ-वन्ति। सत्तायान्त्वष्टपञ्चाशदुत्तरशतभेदाः स्युः। विवृताश्चैते सर्वे कर्मग्रन्थे ॥

आत्मनो विशेषबोधावरणकारणं कर्म ज्ञानावर-णम्। आत्मनः सामान्यबोधावरणसाधनं कर्म दर्श-नावरणम्। सुखदुःखानुभवप्रयोजकं कर्म वेदनीयम्। रागद्वेषादिजनकं कर्म मोहनीयम्। गतिचतुष्टयस्थि-तिप्रयोजकं कर्म आयुः। नरकगत्यादिनानापर्याय-प्रयोजकं कर्म नामकर्म। उच्चनीचजातिव्यवहारहेतुः कर्म गोत्रम्। आत्मनो वीर्यादिप्रतिबन्धकं कर्म अन्तरायकर्म ॥

ज्ञानदर्शनावरणवेदनीयान्तरायाणां त्रिंशत्सा-गरोपमकोटीकोटिकालं यावत्, मोहनीयस्य सप्तति-सागरोपमकोटीकोटिकालं यावत्, विंशतिसागरो-पमकोटीकोटिकालं यावन्नामगोत्रयोः, आयुषश्च त्रय-स्त्रिंशत्सागरोपमकालं यावत्परास्थितिर्बोध्या। एव-मेव वेदनीयस्य द्वादशमुहूर्त्ता, नामगोत्रयोरष्टमु-हूर्त्ता, शेषाणाञ्चान्तर्मुहूर्त्तमपरास्थितिरिति ॥

इति बन्धतत्त्वम्



कृत्स्नकर्मविमुक्त्याऽऽत्मनः स्वात्मन्यवस्थानं मोक्षः। तद्वान् मुक्तः। सोऽनुयोगद्वारैः सिद्धान्त-प्रसिद्धैस्सत्पदप्ररूपणादिभिर्नवभिर्निरूपणादुपचा-रेण नवविधः ॥

गत्यादिमार्गणाद्वारेषु सिद्धसत्ताया अनुमाने-नागमेन वा निरूपणं सत्पदप्ररूपणा ॥

तत्र गतीन्द्रियकाययोगवेदकषायज्ञानसंयमदर्श-नलेश्याभव्यसम्यक्त्वसंज्ञ्याहारकरूपाश्चतुर्दश मू-लभूता मार्गणाः। नरकतिर्यङ्मनुष्यदेवभेदेन चतस्रो गतिमार्गणाः। एकद्वित्रिचतुःपञ्चेन्द्रियभेदेन पञ्चे-न्द्रियमार्गणाः। पृथिव्यप्तेजोवायुवनस्पतित्रसभेदेन षट् कायमार्गणाः। मनोवाक्कायास्तिस्रो योगमार्गणाः। पुंस्त्रीनपुंसकभेदेन तिस्रो वेदमार्गणाः। क्रोधमान-मायालोभरूपाश्चतस्रः कषायमार्गणाः। मतिश्रुता-वधिमनःपर्यवकेवलमत्यज्ञानश्रुताज्ञानविभङ्गज्ञानभे-दादष्टौ ज्ञानमार्गणाः। मिथ्यादृष्टीनां मतिश्रुताव-धयः क्रमेण मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानान्युच्य-न्ते। अत्र पञ्चविधत्वेऽपि ज्ञानानामन्वेषणाप्रस्तावे आद्यत्रयविपरीतानामपि मत्यज्ञानादीनां ज्ञानत्वेन ग्रहणादष्टविधत्वं ज्ञानमार्गणाया बोध्यम्। मनः-पर्यवकेवलयोस्तु वैपरीत्याभाव एव। अग्रे संयमादि-ष्वप्येवमेव वैपरीत्येन मार्गणा विज्ञेयाः। सामायिक-

छेदोपस्थापनपरिहारविशुद्धिसूक्ष्मसंपराययथाख्या-तदेशविरत्यविरतिरूपास्सप्त चारित्रमार्गणाः । चक्षुरचक्षुरवधिकेवलभेदेन चतस्रो दर्शनमार्गणाः । कृष्णनीलकापोततेजःपद्मशुक्लभेदेन षड् लेश्यामार्गणाः ॥

अल्पफलाय फलिन आमूलं विनाशकरणाध्यवसायः कृष्णलेश्या । यथाफलग्रहणार्थं वृक्षच्छेदाध्यवसायः ॥

अल्पप्रयोजनाय तदंशच्छेदनाध्यवसायो नीललेश्या । यथा फलाय शाखाच्छेदाध्यवसायः ॥

अल्पफलार्थं तदंशांशच्छेदनाध्यवसायः कापोतलेश्या । यथा तदर्थं प्रतिशाखाछेदाध्यवसायः ॥

अल्पफलार्थं अंशांशापेक्षया न्यूनांशछेदनाध्यवसायः तेजोलेश्या । यथा फलग्रहणाय स्तबकछेदनाध्यवसायः ॥

ईषत्क्लेशप्रदानेन फलग्रहणाध्यवसायः पद्मलेश्या । यथा वृक्षात्फलमात्रवियोजनाध्यवसायः ॥

इतरक्लेशाकरणतः फलग्रहणाध्यवसायश्शुक्ललेश्या । यथा भूपतितफलग्रहणाध्यवसायः ॥

भव्याभव्यभेदेन द्विविधा भव्यमार्गणा । तत्र भव्यः सिद्धिगमनयोग्यः तद्विपरीतोऽभव्यः ॥



औपशमिकक्षायोपशमिकक्षायिकमिश्रसास्वादनमिथ्यारूपेण षट् सम्यक्त्वमार्गणाः । संज्ञासंज्ञिभेदेन द्विधा संज्ञिमार्गणा । समनस्कास्संज्ञिनो मनोहीना असंज्ञिनः ॥

आहारकानाहारकभेदेन द्विविधाऽऽहारकमार्गणा । आहारकरणशीला आहारकास्तद्भिन्ना अनाहारकाः ॥

तत्र नरगतिपञ्चेन्द्रियजातित्रसकायभव्यसंज्ञियथाख्यानक्षायिकानाहारककेवलज्ञानकेवलदर्शनेषु मोक्षो न शेषेषु ॥

सिद्धजीवसंख्यानिरूपणं द्रव्यप्रमाणम् । तच्च सिद्धजीवानामनन्तत्वं बोध्यम् ॥

चतुर्दशरज्जूप्रमितस्य लोकस्य कियद्भागे सिद्धस्थानमिति विचारः क्षेत्रद्वारम् । लोकस्यासंख्येयभागे सिद्धशिलोर्ध्वं सिद्धस्थानं, असंख्येयाकाशप्रदेशपरिमाणं सिद्धानां क्षेत्रावगाहो ज्ञेयः ॥

सिद्धात्मनोऽवगाहनाकाशपरिमाणतस्स्पर्शनावगाहना कियतीति विचारस्स्पर्शनाप्ररूपणा । अवगाहनातस्तेषामधिका स्पर्शना भवति ॥

सिद्धावस्थानं कियत्कालमिति विचारः काल-

द्वारम् । व्यक्त्यपेक्षया साद्यनन्तः जातिमाश्रित्या-नाद्यनन्तः स्यात् ॥

परित्यक्तस्य पुनः परिग्रहणावान्तरकालविचारोऽन्तरप्ररूपणा । सिद्धानां प्रतिपाताभावादन्तरं नास्तीति ध्येयम् ॥

संसार्यात्मसंख्यापेक्षया कियद्भागे सिद्धा इति विचारो भागद्वारम् । अनन्तानन्तसंसारिजीवापेक्षया अनन्ता अपि सिद्धास्तदनन्तभागे भवन्ति ॥

औपशमिकक्षायिकक्षायोपशमिकौदयिकपारिणामिकभेदेन पञ्च भावाः । कर्मणामुपशमेनौपशमिकः, क्षयेण क्षायिकः, क्षयोपशमेन क्षायोपशमिकः, उदयेनौदयिकः, स्वभावावस्थानेन च पारिणामिको ज्ञेयः । एषु सिद्धाः कतमे भावे वर्तन्त इति विचारो भावद्वारम् । तेषां ज्ञानदर्शने क्षायिके, जीवत्वं च पारिणामिकमिति भावद्वयं स्यात् ॥

कतमे वेदे सिद्धा अल्पाः कतमे च बहव इति विचारोऽल्पबहुत्वद्वारम् । नपुंसके स्तोकाः स्त्रीपुरुषयोः क्रमतस्संख्येयगुणा विज्ञेयाः ॥

सिद्धा अपि जिनाजिनतीर्थातीर्थगृहिलिङ्गान्यलिङ्गस्वलिङ्गस्त्रीलिङ्गपुरुषलिङ्गनपुंसकलिङ्गप्रत्येकबुद्ध-



स्वयम्बुद्धबुद्धबोधितैकानेकसिद्धभेदेन पञ्चदशविधाः ॥

अनुभूततीर्थकरनामविपाकोदयजन्यसमृद्धयो मुक्ता जिनसिद्धाः । यथा ऋषभादयः । अननुभूततीर्थकरनामविपाकोदयजन्यसमृद्धयो मुक्ता अजिनसिद्धाः । यथा पुण्डरीकगणधरादयः ॥

प्रवर्तिते तीर्थे मुक्तास्तीर्थसिद्धाः । यथा गणधारिणः । अर्वाक् तीर्थस्थापनाया एव मुक्ता अतीर्थसिद्धाः यथा मरुदेवा ॥

पूर्वभवाऽऽसेवितसर्वविरतिसामर्थ्यजन्यकेवलज्ञाना ज्ञानप्राप्त्यूर्ध्वं बहुलायुषोऽभावाद्गृहस्थावस्थायामेवान्तर्मुहूर्ताभ्यन्तरे मुक्ता गृहिलिङ्गसिद्धाः । यथा भरतचक्रीत्युच्यते । भवान्तराऽऽसेवितसर्वविरतिजन्यकेवलज्ञाना अल्पायुष्कास्सन्तस्तापसादिलिङ्गेनान्तर्मुहूर्तान्तरे मुक्ता अन्यलिङ्गसिद्धाः । यथा वल्कलचिरी । रत्नत्रयवन्तो रजोहरणादिलिङ्गेन युक्ता मुक्तास्स्वलिङ्गसिद्धाः यथा साधवः ॥

सम्यग्दर्शनादिमहिम्ना स्त्रीशरीरान्मुक्तास्स्त्रीलिङ्गसिद्धाः । यथा चन्दनाप्रभृतयः । रत्नत्रयेण पुरुषशरीरान्मुक्ताः पुरुषलिङ्गसिद्धाः । यथा गौतमग-

णधरादयः। कृत्स्नकर्मक्षयात् नपुंसकशरीरान्मुक्ता नपुंसकलिङ्गसिद्धाः। यथा गाङ्गेयः॥

एकनिमित्तमात्रदर्शनजन्यवैराग्यास्तत्कालसम्प्राप्तरत्नत्रया मुक्ताः प्रत्येकबुद्धसिद्धाः। यथा करकण्डुद्विमुखनमिराजर्षिप्रभृतयः। निमित्तदर्शनमन्तरा बोधप्राप्तिपूर्वकं केवलिनो मुक्तास्स्वयम्बुद्धसिद्धाः। यथा कपिलादयः। उपदेशजन्यप्रतिबोधा अवाप्तरत्नत्रया मुक्ता बुद्धबोधितसिद्धाः। यथा जम्बूस्वामिप्रभृतयः॥

इतरानवाप्तमुक्तिकैकसमयावाप्तमुक्तिका एकसिद्धाः। यथा श्रीमहावीरस्वामिनः। एकस्मिन् समयेऽनेकैस्सह मुक्ता अनेकसिद्धाः। यथा श्रीऋषभदेवाद्याः॥

इति मोक्षतत्त्वनिरूपणम्

सम्यक्श्रद्धा यथाशास्त्रं सविभागा सलक्षणा।
संक्षेपेण समाख्याता स्यान्मोदाय विपश्चिताम्॥





मतिश्रुतावधिमनःपर्यवकेवलानि ज्ञानानि॥

एतान्येव प्रमाणानि। यथार्थनिर्णयः प्रमाणम्। तद्विविधं पारमार्थिकप्रत्यक्षं परोक्षञ्चेति॥

तत्रावधिमनःपर्यवकेवलानि पारमार्थिकप्रत्यक्षाणि। मतिश्रुते परोक्षे॥

परोक्षमपि सांव्यवहारिकप्रत्यक्षस्मरणप्रत्यभिज्ञातर्कानुमानागमभेदात् षड्विधम्।

अव्यवहितात्मद्रव्यमात्रसमुत्पन्नं ज्ञानं पारमार्थिकप्रत्यक्षम्। तद्विविधं सकलं विकलञ्च। कृत्स्नावरणक्षयात्केवलं ज्ञानं सकलम्। अशेषद्रव्यपर्यायविषयकसाक्षात्कारः केवलम्। इदञ्च घातिकर्मक्षयाद्भवति। तद्वानेव सर्वज्ञः॥

अवधिमनःपर्यवौ तु तत्तदावरणक्षयोपशमजन्यत्वाद्विकलौ॥

इन्द्रियसंयमनिरपेक्षो रूपिद्रव्यविषयकसाक्षात्कारोऽवधिः। स द्विविधो भवजन्यो गुणजन्यश्चेति। भवो जन्म, तस्माज्जन्यो यथा सुरनारकाणाम्, गुणस्सम्यग्दर्शनादि तज्जन्यो यथा नरतिरश्चाम्॥

अनुगाम्यननुगामिहीयमानवर्धमानप्रतिपात्यप्रतिपातिभेदात् षड्विधो अवधिः। अवधिमत्पु-

रुषसहगमनस्वभावो अनुगामी । उत्पत्त्यवच्छेदकशरीरावच्छेदनैव विषयावभासकोऽननुगामी । स्वोत्पत्तितः क्रमेणाल्पविषयो हीयमानः । स्वोत्पत्तितः क्रमेणाधिकविषयी वर्धमानः । उत्पत्त्यनन्तरं पतनशीलः प्रतिपाती । तद्विपरीतोऽप्रतिपाती ॥

संयमविशुद्धिहेतुकं मनोद्रव्यपर्यायमात्रसाक्षात्कारि ज्ञानं मनःपर्यवः । स ऋजुमतिविपुलमतिभेदेन द्विविधः । आद्यज्ञानवान् कदाचित्प्रच्यवते । द्वितीयस्तु न कदापीत्यनयोर्वैषम्यम् ॥

व्यवहितात्मद्रव्यजन्यं ज्ञानं परोक्षम् ।

इन्द्रियमनोजन्यो विशदावभासस्सांव्यवहारिकप्रत्यक्षम् । अनुमानादिभ्यो विशेषप्रकाशनात् विशदत्वमस्य । तद्विविधं ऐन्द्रियं मानसञ्च । इन्द्रियजन्यं प्रत्यक्षं ऐन्द्रियम् । मनोजन्यं प्रत्यक्षं मानसम् ॥

तत्रेन्द्रियं द्रव्यभावभेदेन द्विविधम् । निर्वृत्त्युपकरणभेदेन द्रव्येन्द्रियं द्विविधम् । निर्वृत्तिराकारः, निर्वृत्तीन्द्रियमपि द्विविधं बाह्याभ्यन्तरभेदात् । बाह्यं गोलकादि । आन्तरं कदम्बपुष्पाद्याकारः पुद्गलविशेषः । आन्तरेन्द्रियनिष्ठः स्वस्वार्थग्रहणसामर्थ्यात्मकशक्तिविशेष उपकरणेन्द्रियम् । पुद्गल-



शक्तिरूपत्वादस्य द्रव्यत्वम् । अस्योपहते च निर्वृत्तीन्द्रियसत्त्वेऽपि नार्थग्रहः ॥

भावेन्द्रियमपि द्विविधम् लब्ध्युपयोगभेदात् । आत्मनिष्ठा इन्द्रियावरणक्षयोपशमरूपार्थग्रहणशक्तिर्लब्धिः । अर्थग्रहणनिमित्तः आत्मव्यापारपरिणामविशेष उपयोगः । अयमेव प्रत्यक्षं प्रति करणम् । समुदितान्येतानि शब्दाद्यर्थं गृह्णन्ति, इन्द्रियव्यपदेशभाञ्जि च ॥

तत्रेन्द्रियाणि चक्षूरसनघ्राणत्वक्श्रोत्ररूपाणि पञ्च ॥

रूपग्राहकमिन्द्रियं चक्षुः अप्राप्य प्रकाशकारि । रूपं श्वेतरक्तपीतनीलकृष्णरूपेण पञ्चविधम् ॥

रसग्राहकमिन्द्रियं रसनम् । प्राप्यकारि । रसश्चाम्लमधुरतिक्तकषायकटुभेदेन पञ्चविधः ॥

गन्धज्ञानासाधारणकारणमिन्द्रियं घ्राणम् । प्राप्यकारि । गन्धोऽपि सुरभिदुरभिभेदेन द्विविधः ॥

स्पर्शग्राहकमिन्द्रियं त्वक् प्राप्यप्रकाशकारिणी । शीतोष्णस्निग्धरूक्षमृदुकर्कशगुरुलघुरूपेणाष्टविधः स्पर्शः ॥

शब्दग्राहकमिन्द्रियं श्रोत्रम् । प्राप्यकारि । सचित्ताचित्तमिश्रभेदात् त्रिविधश्शब्दः ॥

मतिश्रुतविषयीभूतार्थज्ञानसाधनमनिन्द्रियं मनः। अप्राप्यप्रकाशकारि। इदमपि द्रव्यभावभेदेन द्विविधम्। मनस्त्वेन परिणतमशेषात्मप्रदेशव्यापि पौद्गलिकं द्रव्यमनः। तदावरणक्षयोपशमजन्योऽर्थग्रहणोन्मुख आत्मव्यापारविशेषो भावमनः॥

सांव्यवहारिकश्चावग्रहेहापायधारणाभेदेन चतुर्विधम्। विषयेन्द्रियमनोभिसम्बन्धजन्यदर्शनजनितं सत्तावान्तरसामान्यवद्वस्तुविषयकं ज्ञानमवग्रहः। यथायं मनुष्य इत्यादि। सत्तामात्रावगाहि ज्ञानं दर्शनमालोचनम्। यथेदं किञ्चिदिति। योग्यतैवात्र विषयेण चक्षुर्मनसोः सम्बन्धः। सा चानतिदूरासन्नव्यवहितदेशाद्यवस्थानरूपा। इतरेन्द्रियेषु संश्लेषः॥

अवगृहीतधर्मिण्यवगृहीतसामान्यावान्तरविशेषस्य पर्यालोचनमीहा। इयञ्चावगृहीतसामान्यधर्मावान्तरधर्मविषयसंशयाज्जायते। यथाऽयं मनुष्यः पौरस्त्यो वा पाश्चात्यो वेति संशयात् लक्षणविशेषेण पौरस्त्य एवायं भवितव्य इति।

ईहाविषयविशेषधर्मवत्तानिर्णयोऽपायः। यथाऽयं पाश्चात्य एवेति॥ अयमेव प्रत्यक्षप्रमाणमुच्यते न त्ववग्रहेहौ तयोरनिर्णयरूपत्वात्॥

स्मरणोत्पत्त्यनुकूलोऽवायो धारणा। इयञ्च सं-



ख्येयासंख्येयकालवर्त्तिनी ज्ञानरूपा संस्कारशब्दवाच्या च। अवग्रहादयस्त्वान्तर्मौहूर्तिकाः॥ केचित्तु आत्मशक्तिविशेष एव संस्कारशब्दवाच्योऽव्यवहितिहेतुश्च नधारणा, क्षायोपशमिकोपयोगानां युगपद्भावविरोधात्। परम्परया तस्यास्तद्धेतुत्वे न किंचिद्दूषणमिति प्राहुः॥

एषाञ्च द्रव्यार्थिकनयापेक्षयैक्यं, पर्यायार्थिकनयापेक्षया च भिन्नत्वम्॥

तथाचायं क्रमः इन्द्रियार्थयोर्योग्यताख्ये सम्बन्धे सति सन्मात्रज्ञानं दर्शनाख्यं प्रथमतः समुन्मीलति, इदं किञ्चिदिति। ततः केनचिज्जात्यादिनावग्रहोऽयं मनुष्य इति। ततोऽनिर्धारितरूपेण संशयोऽयं पौरस्त्यो वा पाश्चात्यो वेति। ततो नियताकारेण संभावनात्मिकेहाऽयं पाश्चात्य एव भवितव्य इति। अनन्तरमीहिताकारेण निर्णयात्मकोऽपायोऽयं पाश्चात्य एवेति। ततः कालान्तरस्मृतिहेतुत्वेन धारणोदेतीति॥

इन्द्रियमनोन्यतरजन्योऽभिलापनिरपेक्षस्स्फुटावभासो मतिज्ञानम्। इदञ्च प्रत्येकेन्द्रियैर्मनसा चावग्रहादिक्रमेण जायमानत्वाच्चतुर्विंशतिविधम्। रसनादीन्द्रियैश्चतुर्भिरेव चतुर्विधा व्यञ्जनावग्रहा

भवन्ति । न चक्षुर्मनोभ्यां, विषयेन्द्रियसंश्लेषाभावात् । स्पर्शनादीन्द्रियाणामुपकरणात्मकानां स्पर्शाद्याकारेण परिणतपुद्गलानां च यः परस्परं संश्लेषस्सा व्यंजनेत्युच्यते । सोऽयं चतुर्विधो व्यञ्जनावग्रह इति मिलित्वाष्टविंशतिविधं मतिज्ञानम् । श्रुतज्ञाने तु नावग्रहादयो भवन्ति ॥

मतिज्ञानापेक्षो वाच्यवाचकभावपुरस्कारेण शब्दसंस्पृष्टार्थग्रहणविशेषः श्रुतज्ञानम् । तदनुकूलोपयोगोऽपि श्रुतम् । तच्चाक्षरानक्षरसंज्ञ्यसंज्ञि सम्यङ्मिथ्यात्वसाद्यनादिसपर्यवसितापर्यवसितगमिकागमिकाङ्गप्रविष्टानङ्गप्रविष्टश्रुतभेदेन चतुर्दशविधम् ॥

संज्ञाव्यञ्जनलब्ध्यन्यतमवत् श्रुतमक्षरश्रुतम् । यथा क्रमेण लिपिविशेषः, भाष्यमाणाकारादिः, त्वङ्मनो निमित्तकः श्रुतोपयोगः । भावश्रुतहेतुरुच्छ्वसितादिरनक्षरश्रुतम् । समनस्कस्य श्रुतं संज्ञिश्रुतम् । तद्विपरीतमसंज्ञिश्रुतम् । सम्यग्दृष्टीनां श्रुतं सम्यक् श्रुतम् । मिथ्यादृष्टीनां श्रुतं मिथ्यात्वश्रुतम् । आदिमच्छ्रुतं सादिश्रुतम् । इदं पर्यायार्थिकनयापेक्षया । आदिशून्यं श्रुतमनादिश्रुतम् । इदन्तु द्रव्यार्थिकनयापेक्षया । अन्तवच्छ्रुतं सपर्यवसितश्रुतम् । अनन्तवच्छ्रुतमपर्यवसितम् । इमेऽपि तथैव । प्रायः



सदृशपाठात्मकं श्रुतं गमिकश्रुतम् । तद्विपरीतमगमिकम् । द्वादशाङ्गगतं श्रुतमङ्गप्रविष्टम् । यथाऽऽचाराङ्गादि । तद्भिन्नं स्थविरकृतं श्रुतमनङ्गश्रुतम् । यथाऽऽवश्यकादि ॥

मतिश्रुतयोर्बहुवक्तव्यत्वेऽपि विस्तरभिया नोच्यते ॥

इति सांव्यवहारिकप्रत्यक्षम् ।

अनुभवमात्रजन्यं ज्ञानं स्मृतिः । यथा स घट इत्यादि । अत्र प्रायेण तत्तोल्लिख्यते । अनुभवोऽत्र प्रमाणरूपः । आत्मशक्तिरूपसंस्कारो द्वारम् । प्रबोधः सहकारी । पूर्वानुभूतविषयिणीयम् । अर्थाविसंवादकत्वाच्चास्याः प्रामाण्यम् ॥

इति स्मृतिनिरूपणम्

अनुभवस्मरणोभयमात्रजन्यं ज्ञानं प्रत्यभि ज्ञानम् । इदं तत्तेदन्तोल्लेखनयोग्यमेकत्वसादृश्यवैलक्षण्यप्रतियोगित्वादिविषयकं सङ्कलनज्ञानापरपर्यायमतीतवर्तमानोभयकालावच्छिन्नवस्तुविषयकञ्च । तत्रैकत्वविषयकं, स एवायं देवदत्त इत्यादि ज्ञानम् । सादृश्यविषयकं, गोसदृशो गवय इत्यादि । अत्रैवोपमानस्यान्तर्भावः । वैलक्षण्यविषयकं, गोविसदृशो

महिष इत्यादि । प्रतियोगित्वविषयकश्च, इदं तस्मादूरं समीपमल्पं महद्वेत्याद्युदाहरणानि बोध्यानि ॥

इति प्रत्यभिज्ञानिरूपणम्

उपलम्भानुपलम्भादिजन्यं व्याप्त्यादिविषयकं ज्ञानं तर्कः । यथा वह्नौ सत्येव धूमो भवति वह्नावसति धूमो न भवत्येवेति ज्ञानं व्याप्तिविषयकम् । यथा वा घटजातीयश्शब्दो घटजातीयस्य वाचको घटजातीयोऽर्थो घटजातीयशब्दवाच्य इति ज्ञानं वाच्यवाचकभावसम्बन्धविषयकम् । व्याप्तिविषयकज्ञानश्च व्याप्तिज्ञानकाले सकृदुपलम्भानुपलम्भाभ्यां साक्षादेव जायते । क्वचित्तु पूर्वं असकृदुपलम्भानुपलम्भाभ्यामेव कालान्तरे साधनग्रहणप्राग्दृष्टसाध्यसाधनस्मरणप्रत्यभिज्ञापरम्परया जायते । उपलम्भश्च साध्यसत्त्व एव हेतूपलम्भ इति । अनुपलम्भश्च साध्याभावे हेतोरनुपलम्भ इति । साध्यसाधनग्रहणात्मकाविमौ प्रमाणमात्रेणाभिप्रेतौ ॥

वाच्यवाचकभावसम्बन्धज्ञानन्तु क्वचिदावापोद्वापाभ्यां समुदेति । यथा प्रयोजकवृद्धप्रयुक्तगामानयेतिवाक्यश्रवणसमनन्तरगवानयनप्रवृत्तिमत्प्रयोज्यवृद्धचेष्टाप्रेक्षणजन्यैतद्वाक्यजन्यैतदर्थविषयकज्ञानवानयमित्यनुमानज्ञानवतोऽपि बालस्य तत्त-



दर्थविशेष्यकतद्वाक्यघटिततत्तत्पदवाच्यत्वसंशयवतः कालान्तरीयप्रयोजकवृद्धप्रयुक्तगां नयाश्वमानयेतिगोशब्दानयनशब्दविषयकावापोद्वापवद्वाक्यश्रवणजन्यप्रयोज्यवृद्धप्रवृत्तितो गोजातीयोऽर्थो गोशब्दस्य वाच्यो गोजातीयश्च शब्दो गोजातीयस्य वाचक इत्येवं रूपस्तर्कः समुल्लसति । क्वचिच्चाप्तपुरुषप्रयुक्तेन परार्थतर्करूपेणेदृशोऽर्थ ईदृशशब्दवाच्य ईदृशशब्दश्चेदृशार्थस्य वाचक इति वाक्येन वाच्यवाचकभावप्रतिपत्तिः । तर्के चानुभवः स्मृतिः प्रत्यभिज्ञानश्च कारणम् ॥

इति तर्कनिरूपणम्

हेतुज्ञानव्याप्तिस्मरणकारणकं साध्यविज्ञानमनुमानम् । यथा पर्वतो वह्निमानिति विज्ञानम् ॥

निश्चितव्याप्तिमान् हेतुः । यथा वह्नौ साध्ये धूमः । व्याप्तिमत्त्वमेव हेतो रूपं न तु पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वात्मकं त्रिरूपं, अबाधितत्वासत्प्रतिपक्षाभ्यां पञ्च रूपं वा । असाधारणत्वाभावात् ॥

हेतौ साध्याभाववदवृत्तित्वं व्याप्तिः । इयमेवान्यथानुपपत्तिप्रतिबन्धाविनाभावशब्दैरुच्यते । वह्निं विना धूमस्यानुपपत्तेर्वह्निसत्व एव धूमोपपत्तेश्च वह्निनिरूपितान्यथानुपपत्त्यादिशब्दवाच्या व्याप्तिर्धूमे

वर्त्तते। अतो धूमो व्याप्यो निरूपकश्च वह्निर्व्यापकः। तथा च व्याप्यसत्त्वेऽवश्यं व्यापकसत्त्वं, व्यापकसत्त्व एव च व्याप्येन भवितव्यमिति व्याप्यव्यापकभावनियमः सिद्ध्यति ॥

सोऽयं व्याप्त्यपरपर्यायो नियमो द्विविधः। सहभावनियमः क्रमभावनियमश्चेति ॥

तत्र सहभावनियम एकसामग्रीप्रसूतयो रूपरसयोर्व्याप्यव्यापकयोश्च शिंशपात्ववृक्षत्वयोर्भवति ॥

क्रमभावनियमस्तु कृत्तिकोदयरोहिण्युदययोः पूर्वोत्तरभाविनोः, कार्यकारणयोश्च धूमवह्न्योर्भवति ॥

प्रमाणाबाधितमनिर्णीतं सिषाधयिषितं साध्यम्। यथा वह्निमत्पर्वतः। अस्यैव च पक्ष इति नामान्तरम्। साध्यविशिष्टत्वेन धर्मिण एव सिषाधयिषितत्वात्। इदं चानुमानजन्यप्रतिपत्तिकालापेक्षया। व्याप्तिग्रहणवेलायां तु वह्न्यादिर्धर्म एव साध्यः ॥

धर्मिणश्च प्रसिद्धिः प्रमाणाद्विकल्पादुभयतो वा ज्ञेया। यथाऽस्ति सर्वज्ञ इत्यत्र धर्मिणः सर्वज्ञस्य विकल्पात् सिद्धिः। पर्वतो वह्निमानित्यत्र पर्व-



तस्य प्रत्यक्षप्रमाणात्, शब्दः परिणामीत्यादौ कालत्रयवर्तिशब्दधर्मिण उभयात् ॥

हेतुर्द्विविधो विधिस्वरूपः प्रतिषेधस्वरूपश्चेति। तथा विधिस्वरूपो हेतुर्द्विधा विधिसाधको निषेधसाधकश्चेति। एवं प्रतिषेधस्वरूपो हेतुरपि ॥

तत्र विधिसाधको विधिरूपो हेतुर्व्याप्यकार्यकारणपूर्वोत्तरसहचरभेदात् षोढा। विधिस्तु सदसदात्मके पदार्थे सदंशः, असदंशश्च प्रतिषेधः। प्रतिषेधश्चतुर्धा प्रागभावप्रध्वंसाभावान्योन्याभावात्यन्ताभावभेदात्। यन्निवृत्तावेव कार्याविर्भावः स प्रागभावः। यथा घटं प्रति मृत्पिण्डः। यदुत्पत्तिनिबन्धनं कार्यविघटनं स प्रध्वंसाभावः। यथा घटं प्रति कपालकदम्बकम्। स्वरूपान्तरात् स्वरूपव्यवच्छेदोऽन्योन्याभावः। यथा पटस्वभावाद्घटस्वभावस्य। कालत्रयेऽपि तादात्म्यपरिणतिनिवृत्तिरत्यन्ताभावः। यथा जीवाजीवयोः। सोऽयं प्रतिषेधः कथञ्चिदधिकरणाद्भिन्नाभिन्नः।

विध्यात्मको हेतुः साध्याविरुद्धप्रतिषेध्यविरुद्धभेदेन द्विधा। एवं निषेधात्मकोऽपि।

तत्र शब्दः परिणामी प्रयत्नानन्तरीयकत्वादिति व्याप्यो विधिहेतुः। पर्वतो वह्निमान् धूमा-

दिति कार्यात्मकः। भविष्यति वृष्टिर्विलक्षणमेघोपलम्भादिति कारणात्मकः। उदेष्यति शकटं कृत्तिकोदयादिति पूर्वचरः। उदिता चित्रा स्वात्युदयादित्युत्तरचरः। रूपवान् रसादिति सहचर इतीमानिन्यविरुद्धविधिहेतोरुदाहरणानि ॥

विरुद्धविधिहेतुः प्रतिषेधसाधको प्रतिषेध्यस्वभावविरुद्धः प्रतिषेध्यस्य साक्षाद्व्याप्यादिभेदेन च सप्तप्रकारः ॥

नास्त्येव सर्वथैकान्तोऽनेकान्तोपलम्भादिति प्रतिषेध्यस्य यः स्वभावः सर्वथैकान्तत्वं तेन साक्षाद्विरुद्धो विधिहेतुः। नास्य नवतत्त्वनिश्चयस्तत्संशयादिति प्रतिषेध्यस्य नवतत्त्वनिश्चयस्य विरुद्धेनानिश्चयेन व्याप्यः। नास्त्यत्र शीतं धूमादिति प्रतिषेध्यशीतविरुद्धवह्निकार्यरूपः। न देवदत्ते सुखमस्ति हृदयशल्यादिति प्रतिषेध्यसुखविरुद्धदुःखकारणरूपः। मुहूर्तान्ते नोदेष्यति शकटं रेवत्युदयादिति प्रतिषेध्यशकटोदयविरुद्धाश्विन्युदयपूर्वचरः। मुहूर्त्तात्प्राङ्नोदगाद्भरणिः पुष्योदयादिति प्रतिषेध्यभरण्युदयविरुद्धपुनर्वसूदयोत्तरचरः। नास्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनादिति प्रतिषेध्यमिथ्याज्ञानविरुद्धसम्यग्ज्ञानसहचर इति ॥



अविरुद्धनिषेधात्मको हेतुः प्रतिषेधसाधने स्वभावव्यापककार्यकारणपूर्वचरोत्तरचरसहचरभेदेन सप्तधा ॥

भूतलेऽत्र कुम्भो नास्ति दृश्यत्वे सति तत्स्वभावानुपलम्भादितित्यविरुद्धस्वभावानुपलब्धिरूपो निषेधात्मको हेतुः। अत्र शिंशपा नास्ति वृक्षाभावादित्यविरुद्धव्यापकानुलब्धिः। नास्त्यत्र सामर्थ्यवद्बीजमङ्कुरानवलोकनादित्यविरुद्धकार्यानुपलब्धिः। नास्त्यत्र धूमो वह्न्यभावादित्यविरुद्धकारणानुपलब्धिः। न भविष्यति मुहूर्त्तान्ते शकटं कृत्तिकोदयानुपलब्धेरित्यविरुद्धपूर्वचरानुपलब्धिः। नोदगाद्भरणिः मुहूर्तात्प्राक् कृत्तिकोदयानुपलम्भादित्यविरुद्धोत्तरचरानुपलब्धिः। नास्त्यस्य सम्यग्ज्ञानं सम्यग्दर्शनानुपलम्भादित्यविरुद्धसहचरानुपलब्धिः ॥

विरुद्धनिषेधात्मको हेतुर्विधिप्रतीतौ कार्यकारणस्वभावव्यापकसहचरभेदेन पञ्चधा ॥

अत्र शरीरिणि रोगातिशयो वर्तते नीरोगव्यापारानुपलब्धेरिति साध्यविरुद्धारोग्यकार्यव्यापारानुपलब्धिरूपो निषेधहेतुः। अस्त्यस्मिन् जीवे कष्टमिष्टसंयोगाभावादिति साध्यविरुद्धसुखकारणानुपलब्धिः। सर्वं वस्त्वनेकान्तात्मकमेकान्तस्वभावानु-

पलम्भादिति साध्यविरुद्धस्वभावानुपलब्धिः । अस्त्यत्र छाया औष्ण्यानुपलब्धेरिति साध्यविरुद्धताप्व्यापकानुपलब्धिः । अस्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनानुपलब्धेरिति साध्यविरुद्धसम्यग्ज्ञानसहचरानुपलब्धिः ॥

अनुमानं द्विविधं स्वार्थं परार्थञ्च । वचननिरपेक्षं विशिष्टसाधनात्साध्यविज्ञानं स्वार्थम् । यथाहि वह्निधूमयोर्गृहीताविनाभावः पुरुषः कदाचिद्भूधरादिसमीपमेत्य तत्राविच्छिन्नधूमलेखां पश्यन् यो यो धूमवान् स स वह्निमानिति स्मृतव्याप्तिकः पर्वतो वह्निमानिति प्रत्येति । इदमेव स्वार्थमुच्यते ॥

वचनसापेक्षं विशिष्टसाधनात् साध्यविज्ञानं परार्थम् । उपचाराद्वचनमपि परार्थम् । वचनञ्च प्रतिज्ञाहेत्वात्मकम् । मन्दमतिमाश्रित्य तूदाहरणोपनयनिगमनान्यपि ॥

अनुमेयधर्मविशिष्टधर्मिबोधकशब्दप्रयोगः प्रतिज्ञा । यथा पर्वतो वह्निमानिति वचनम् ॥

उपपत्यनुपपत्तिभ्यां हेतुप्रयोगो हेतुवचनम् । यथा तथैव धूमोपपत्तेः धूमस्यान्यथानुपपत्तेरिति च ॥ एकत्रोभयोः प्रयोगो नावश्यकः । अन्यतरेणैव साध्यसिद्धेः ॥



दृष्टान्तबोधकशब्दप्रयोग उदाहरणम् । साधर्म्यतो वैधर्म्यतो वा व्याप्तिस्मरणस्थानं दृष्टान्तः । यथा महानसादिर्ह्रदादिश्च ॥

दृष्टान्तप्रदर्शितसाधनस्य साध्यधर्मिण्युपसंहारवचनमुपनयः । यथा तथा चायमिति ॥

साध्यधर्मस्य धर्मिण्युपसंहारवचनं निगमनम् । यथा तस्मात्तथेति ॥

इति सद्धेतुनिरूपणम्

असिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासाः । हेतुस्वरूपाप्रतीतिप्रयुक्ताप्रतीतव्याप्तिको हेतुरसिद्धः।

स द्विविधः वादिप्रतिवाद्युभयासिद्धोऽन्यतरासिद्धश्चेति । तत्राद्यो यथा शब्दोऽनित्यश्चाक्षुषत्वादिति । अत्र शब्दस्य चाक्षुषत्वं नोभयस्य सिद्धम् ।

द्वितीये प्रतिवाद्यसिद्धो यथा वृक्षा अचेतना मरणरहितत्वादिति । हेतुरयं वृक्षे जैनस्य प्रतिवादिनोऽसिद्धः । प्राणवियोगरूपमरणस्य स्वीकारात् ॥

वाद्यसिद्धो यथा शब्दः परिणामी उत्पत्तिमत्त्वादिति । अत्र शब्दस्योत्पत्तिमत्त्वं वादिनः सांख्यस्यासिद्धम् ॥

साध्यधर्मविपरीतव्याप्तिको हेतुर्विरुद्धः । यथा

शब्दो नित्यः कार्यत्वादिति। अत्र कार्यत्वमनित्यत्वव्याप्यम् ॥

संदिग्धव्याप्तिको हेतुरनैकान्तिकः । स द्विविधः संदिग्धविपक्षवृत्तिको निर्णीतविपक्षवृत्तिकश्चेति ॥

आद्यो यथा विवादापन्नः पुरुषो न सर्वज्ञो वक्तृत्वादिति । अत्र विपक्षे सर्वज्ञे वक्तृत्वं संदिग्धम् ॥

द्वितीयो यथा पर्वतो वह्निमान् प्रमेयत्वादिति । अत्र विपक्षे ह्रदादौ प्रमेयत्वं निर्णीतम् ॥

पक्षाभासस्त्रिविधः । प्रतीतसाध्यधर्मविशेषणको निराकृतसाध्यधर्मविशेषणकोऽनभीप्सितसाध्यधर्मविशेषणकश्चेति ॥

आद्यो यथा महानसं वह्निमदिति पक्षीकृते महानसे वह्नेः प्रसिद्धत्वादयं दोषः । इदमेव सिद्धसाधनमपि ॥

द्वितीयो यथा वह्निरनुष्ण इति प्रत्यक्षेण निराकृतसाध्यधर्मविशेषणकः । अपरिणामी शब्द इति पक्षः परिणामी शब्द इत्यनुमानेन तथा । धर्मोऽन्ते न सुखप्रद इति धर्मोऽन्ते सुखप्रद इत्यागमेन तथा । चैत्रः काणः इति पक्षः विद्यमानाक्षिद्वयस्य चैत्रस्य सम्यक् स्मरतः स्मरणेन तथा । सदृशे वस्तुनि



तदेवेदमिति पक्षः तेन तुल्यमिदमिति प्रत्यभिज्ञया तथा । यो यो मित्रातनयः स स श्याम इति पक्षः, यो यः शाकाद्याहारपरिणामपूर्वकमित्रातनयस्स श्याम इति तर्केण तथा । नरशिरःकपालं शुचीति लोकेन तथा । नास्ति प्रत्यक्षातिरिक्तं प्रमाणमिति पक्षीकुर्वतश्चार्वाकस्य पक्षोऽयं स्ववचनेन तथा ॥

तृतीयो यथा शब्दस्यानित्यत्वमिच्छतश्शब्दो नित्य इति पक्षस्तस्यानभीप्सितसाध्यधर्मविशेषणक इति ॥

पक्षाभासादिसमुद्भूतं ज्ञानमनुमानाभासम् ॥

असत्यां व्याप्तौ तर्कप्रत्ययस्तर्काभासः । यथा यो यो मित्रातनयः स स श्याम इति ॥

तुल्ये वस्तुन्यैक्यस्य, एकस्मिंश्च तुल्यतायाः प्रत्यभिज्ञानं प्रत्यभिज्ञाभासः । यथा तदेवौषधमिति, एकस्मिंश्च घटे तेन सदृशमिति ज्ञानम् ॥

अननुभूते तदिति बुद्धिः स्मरणाभासः । यथाऽननुभूतशुक्लरूपस्य पुरुषस्य तच्छुक्लं रूपमिति बुद्धिः ॥

मेघादौ गन्धर्वनगरादिज्ञानं दुःखादौ सुखादिप्रत्यक्षश्चेन्द्रियानिन्द्रियनिमित्तकसांव्यवहारिकप्रत्यक्षाभासः ॥

शिवराजर्षेरसंख्यातद्वीपसमुद्रेषु सप्तद्वीपसमुद्रज्ञानमवध्याभासः ॥

मनःपर्यवकेवलयोस्तु नाभासत्वं संयमविशुद्धिजन्यत्वात् कृत्स्नावरणक्षयसमुद्भूतत्वाच्च ॥

आगमाभासस्त्वग्रे वक्ष्यते ॥

दृष्टान्तवद्भासमानो दृष्टान्ताभासः । स द्विविधः साधर्म्यदृष्टान्ताभासो वैधर्म्यदृष्टान्ताभासश्चेति । साधर्म्यदृष्टान्तो नवविधः साध्यसाधनोभयविकल संदिग्धसाध्यसाधनोभयानन्वयाप्रदर्शितान्वयविपरीतान्वयभेदात् ॥

नित्यश्शब्दोऽमूर्तत्वादित्यत्र दुःखस्य दृष्टान्तत्वे तस्यानित्यत्वेन साध्यधर्मविकलता, परमाणोर्दृष्टान्तत्वे मूर्तत्वेन तस्य साधनविकलता, घटस्य-दृष्टान्तत्वे तूभयविकलता ॥

अयं चैत्रो रागी वक्तृत्वाद्देवदत्तवदित्यत्र देवदत्ते रागित्वस्य संदिग्धतया संदिग्धसाध्यधर्मा । अयं वक्ता रागित्वान्मैत्रवदिति संदिग्धसाधनधर्मा । अयं न सर्वज्ञो रागित्वात् मुनिवदिति दृष्टान्ते असर्वज्ञत्वरागित्वयोः संदिग्धत्वात्संदिग्धोभयधर्मा ॥

चैत्रोऽयं रागी वक्तृत्वान्मैत्रवदिति दृष्टान्ते



साध्यहेत्वोः सत्त्वेऽपि यो यो वक्ता स स रागादिमानिति व्याप्त्यसिद्ध्या अनन्वयः ॥

अनित्यः शब्दः कार्यत्वात् घटवदित्यत्र अन्वयसहचारसत्त्वेऽप्यप्रदर्शनादप्रदर्शितान्वयः । तत्रैव यदनित्यं तत्कृतकं यथा घट इत्युक्तौ विपरीतान्वयः ॥

वैधर्म्यदृष्टान्ताभासोऽपि नवविधः । असिद्धसाध्यसाधनोभयव्यतिरेकसंदिग्धसाध्यसाधनोभयव्यतिरेकाव्यतिरेकाप्रदर्शितव्यतिरेकविपरीतव्यतिरेकभेदात् ॥

अनुमानं भ्रमः प्रमाणत्वात् यो भ्रमो न भवति स न भवति प्रमाणं यथा स्वप्नज्ञानमिति दृष्टान्तः स्वप्नज्ञाने भ्रमत्वनिवृत्त्यसिद्ध्या असिद्धसाध्यव्यतिरेकः । निर्विकल्पकं प्रत्यक्षं प्रमाणत्वात् यन्न प्रत्यक्षं न तत् प्रमाणं यथानुमानमित्यत्रानुमानेऽप्रमाणत्वासिद्ध्याऽसिद्धसाधनव्यतिरेकः । घटो नित्यानित्यः सत्त्वात् यो न नित्यानित्यः न स सन् यथा पट इति दृष्टान्तोऽसिद्धसाध्यसाधनोभयव्यतिरेकः ॥

कपिलोऽसर्वज्ञः अक्षणिकैकान्तवादित्वात् यन्नैवं तन्नैवं यथा बुद्ध इति दृष्टान्तः सर्वज्ञत्वस्य बुद्धे संदिग्धतया संदिग्धसाध्यव्यतिरेकः । चैत्रोऽग्राह्य-

वचनः रागित्वात् यन्नैवं तन्नैवं यथा तथागत इति दृष्टान्तस्तथागते अरागित्वस्य संशयात्संदिग्धसाधनव्यतिरेकः । बुधोऽयं न सर्वज्ञः रागित्वादित्यत्र यः सर्वज्ञः सो न रागी यथा बुद्ध इति दृष्टान्ते उभयस्य संशयात् संदिग्धसाध्यसाधनोभयव्यतिरेकः ॥

चैत्रोऽयमरागी वक्तृत्वाद्यन्नैवं तन्नैवं यथा पाषाणशकलमिति दृष्टान्ते साध्यसाधनोभयव्यतिरेकस्य सत्त्वेऽपि व्याप्त्या व्यतिरेकासिद्धेरव्यतिरेकः ॥

अनित्यश्शब्दः कृतकत्वाद्गगनवदिति दृष्टान्तो व्यतिरेकस्याप्रदर्शनादप्रदर्शितव्यतिरेकः ॥

तत्रैव यदकृतकं तन्नित्यं यथा गगनमित्युक्ते विपरीतव्यतिरेकः ॥

पर्वतो वह्निमान् धूमात् यो धूमवान्स वह्निमान् यथा महानसं वह्निमांश्च पर्वतो धूमवानित्युपसंहरणे उपनयाभासः । तत्रैव तस्माद्धूमवान् पर्वतो वह्निमन्महानसमिति निगमने निगमनाभास इति दिक् ॥

इत्याभासनिरूपणं समाप्तश्चानुमानम् ॥

यथार्थप्रवक्तृवचनसम्भूतमर्थविज्ञानमागमः । अर्थविज्ञानहेतुत्वादाप्तशब्दोऽप्यागम उपचारात् ।



यथा गोष्ठे गौरस्ति, धर्मसाध्यः परलोकोऽस्तीत्यादयः ॥

प्रक्षीणदोषो यथास्थितार्थपरिज्ञाता यथास्थितार्थप्रख्यापको यथार्थवक्ता । अयं द्विविधो लौकिकः पित्रादिः, लोकोत्तरस्तीर्थकरादिः ॥

शब्दश्च सङ्केतसापेक्षः स्वाभाविकार्थबोधजनकशक्तिमांश्च ॥

वक्तृगुणदोषाभ्याश्चास्य याथार्थ्यायाथार्थ्ये ॥

सोऽयं शब्दो वर्णपदवाक्यरूपेण त्रिविधः ॥

भाषावर्गणात्मकपरमाण्वारब्धो मूर्त्तिमानकारादिर्वर्णः । घटादिसमुदायघटकवर्णानामपि प्रत्येकमर्थवत्त्वमेव । तद्व्यत्यये अर्थान्तरगमनात् ॥

स्वार्थप्रत्यायने शक्तिमान् पदान्तरघटितवर्णापेक्षणरहितः परस्परसहकारिवर्णसंघातः पदम् ॥

स्वार्थप्रत्यायने शक्तिमान् वाक्यान्तरघटितपदापेक्षारहितः परस्परसहकारिपदसमूहो वाक्यम् ॥

अनेकान्तात्मके पदार्थे विधिनिषेधाभ्यां प्रवर्तमानोऽयं शब्दः सप्तभङ्गीं यदानुगच्छति तदैवास्य पूर्णार्थप्रकाशकत्वात् प्रामाण्यम् । घटोऽस्तीत्यादि-

लौकिकवाक्यानामर्थप्रापकत्वमात्रेण लोकापेक्षया प्रामाण्येऽपि न वास्तविकं प्रामाण्यं, पूर्णार्थप्रकाशकत्वात्, सप्तभङ्गीसमनुगमाभावाच्च ॥

तत्र प्रश्नानुगुणमेकधर्मिविशेष्यकाविरुद्धविधिनिषेधात्मकधर्मप्रकारकबोधजनकसप्तवाक्यपर्याप्तसमुदायत्वं सप्तभङ्गीत्वम् ॥

वाक्यानि च स्यादस्त्येव घटः, स्यान्नास्त्येव घटः, स्यादस्ति नास्ति च घटः, स्यादवक्तव्य एव, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति नास्ति चावक्तव्यश्चेति ॥

सप्तविधप्रष्टृप्रश्नवशात्सप्तवाक्यप्रवृत्तिः प्रश्नानां सप्तविधत्वं तज्जिज्ञासायास्सप्तधात्वात्, सप्तधात्वं जिज्ञासायाः सप्तधा संशयोदयात्, संशयानां सप्तधात्वं तु तद्विषयधर्माणां सप्तधात्वाद्विज्ञेयम् ॥

ते च धर्माः कथञ्चित्सत्त्वं, कथञ्चिदसत्त्वं क्रमार्पितोभयं, कथञ्चिदवक्तव्यत्वं, कथञ्चित्सत्त्वविशिष्टावक्तव्यत्वं, कथञ्चिदसत्त्वविशिष्टावक्तव्यत्वं, क्रमार्पितोभयविशिष्टावक्तव्यत्वञ्च ॥

तत्र प्रथमे भङ्गे सत्त्वस्य प्रधानतया भानं, द्वितीयेऽसत्त्वस्य प्राधान्येन, तृतीये क्रमार्पितसत्त्वासत्त्वयोश्चतुर्थेऽवक्तव्यत्वस्य पञ्चमे सत्त्वविशिष्टावक्तव्यत्वस्य षष्ठेऽसत्त्वविशिष्टावक्तव्यत्वस्य सप्तमे तु क्रमार्पितसत्त्वासत्त्वविशिष्टावक्तव्यत्वस्य । असत्त्वादीनां तु गुणभावेन प्रतीतिः ॥



क्रमार्पितसत्त्वासत्त्वरूपो धर्मः कथञ्चित्सत्त्वाद्यपेक्षया भिन्नः, प्रत्येकघकारादिवर्णापेक्षया घटपदवत् । अवक्तव्यत्वञ्च सहार्पितास्तित्वनास्तित्वयोस्सर्वथा वक्तुमशक्यत्वम् ॥

इयं सप्तभङ्गी सकलादेशविकलादेशाभ्यां द्विधा।

तत्र एकधर्मविषयकबोधजनकं सत् यौगपद्येन अभेदवृत्त्याऽभेदोपचारेण वा तद्धर्माभिन्नानेकयावद्धर्मात्मकपदार्थबोधजनकवाक्यं सकलादेशः ॥

क्रमेण भेदप्राधान्येन भेदोपचारेण वा एकधर्मात्मकपदार्थविषयकबोधजनकवाक्यं विकलादेशः ॥

अभेदवृत्त्यभेदोपचारौ कालस्वरूपार्थसम्बन्धोपकारगुणिदेशसंसर्गशब्दैरष्टाभिर्ग्राह्यौ ॥

तथाहि स्यादस्त्येव घट इत्यादौ अस्तित्वात्मकैकधर्मबोधजनकत्वं वर्तते तथा एककालावच्छिन्नैकाधिकरणनिरूपितवृत्तित्वैकगुणिगुणत्वैकाधिकरण-

वृत्तित्वैकसम्बन्धप्रतियोगित्वैकोपकारकत्वैकदेशावच्छिन्नवृत्तित्वैकसंसर्गप्रतियोगित्वैकशब्दवाच्यत्व--धर्मैः अस्तित्वेनाभिन्ना अनेके ये धर्मास्तदात्मकपदार्थबोधजनकत्वमपीति । सम्बन्धे कथञ्चित्तादात्म्यलक्षणे अभेदः प्रधानं भेदो गौणः, संसर्गे त्वभेदो गौणः भेदः प्रधानम् । तथा च भेदविशिष्टाभेदस्सम्बन्धः अभेदविशिष्टभेदस्संसर्ग इति विवेकः । अयञ्च पर्यायार्थिकनयस्य गुणभावे द्रव्यार्थिकनयस्य प्रधानभावे युज्यते ॥

द्रव्यार्थिकस्य गौणत्वे पर्यायार्थिकस्य प्राधान्ये त्वभेदस्योपचारः कार्योऽभेदासंभवात् ।

तथा हि नैकत्रैकदा विरुद्धनानागुणानामभेदसंभवो धर्मिभेदात्, नापि स्वरूपेण, प्रतिगुणं स्वरूपभेदात् । नाप्यर्थेन, स्वाधारस्यापि भेदात् । नवा सम्बन्धेन, सम्बन्धिभेदेन सम्बन्धभेदात् । नाप्युपकारेण, तत्तज्जन्यज्ञानानां भेदात् । नापि गुणिदेशेन, तस्यापि प्रतिगुणमनेकत्वात् । नापि संसर्गेण, संसर्गिभेदेन भेदात् । नापि शब्देन, अर्थभेदेन तस्य भेदादिति । तस्मादभेदमुपचर्य तद्धर्माभिन्नानेकयावद्धर्मात्मकवस्तुबोधजनकत्वं वाक्यानामिति ॥

घटस्स्यादस्त्येवेति प्रथमं वाक्यमितरधर्माप्र-



तिषेधमुखेन विधिविषयकं बोधं जनयति । अत्र स्याच्छब्दोऽभेदप्राधान्येनाभेदोपचारेण वा सामान्यतः अनन्तधर्मवन्तमाह । अस्तिशब्दोऽस्तित्वधर्मवन्तमाह । एवकारः अयोगव्यवच्छेदमाह, तथा चाभेदप्राधान्येनाभेदोपचारेण वा सामान्यतोऽनन्तधर्मात्मको घटः प्रतियोग्यसमानाधिकरणघटत्वसमानाधिकरणात्यन्ताभावाप्रतियोगिस्वद्रव्याद्यवच्छिन्नास्तित्ववानिति बोधः ॥

घटः स्यान्नास्त्येवेति द्वितीयं वाक्यमन्यधर्माप्रतिषेधमुखेन निषेधविषयकं बोधं जनयति । अत्रापि तादृशो घटः प्रतियोग्यसमानाधिकरणघटत्वसमानाधिकरणात्यन्ताभावाप्रतियोगिपरद्रव्याद्यवच्छिन्ननास्तित्ववानिति बोधः ॥

स्यादस्ति नास्ति च घट इति तृतीयं वाक्यं तादृशे घटे क्रमार्पितस्वपररूपाद्यवच्छिन्नास्तित्वनास्तित्वावच्छिन्नत्वं बोधयति । तथा च तादृशो घटः क्रमार्पितस्वपररूपाद्यवच्छिन्नास्तित्वनास्तित्वोभयधर्मवानिति बोधः ॥

स्यादवक्तव्य एव घट इति चतुर्थं वाक्यं युगपत् स्वरूपपररूपादीनामपेक्षणे वस्तु न केनापि शब्देन वाच्यमिति बोधयति । तथा च तादृशो घटः सत्त्वा-

दिरूपेण वक्तव्य एव सन् युगपत्प्रधानभूतसत्त्वासत्त्वोभयरूपेण प्रतियोग्यसमानाधिकरणाभावाप्रतियोग्यवक्तव्यत्ववानिति बोधः ॥

स्यादस्ति चावक्तव्यश्च घट इति पञ्चमवाक्येन द्रव्यापेक्षया अस्तित्वविशिष्टो युगपद्द्रव्यपर्यायापेक्षयाऽवक्तव्यत्वविशिष्टो घटो बोध्यते। तथा चाभेदप्राधान्येनाभेदोपचारेण वा सामान्यतोऽनन्तधर्मात्मको घटः प्रतियोग्यसमानाधिकरणघटत्वसमानाधिकरणात्यन्ताभावाप्रतियोगिद्रव्याद्यवच्छिन्नास्तित्वविशिष्टयुगपत्स्वपरद्रव्याद्यवच्छिन्नसत्त्वासत्त्वोभयविषयकावक्तव्यत्ववानिति बोधः ॥

स्यान्नास्ति चावक्तव्यश्चेति षष्ठं वाक्यं परद्रव्याद्यपेक्षया नास्तित्वविशिष्टं युगपत्प्राधान्येन स्वपरद्रव्याद्यपेक्षया अवक्तव्यत्वविशिष्टं घटं प्रतिपादयति। तथा च तादृशो घटः प्रतियोग्यसमानाधिकरणघटत्वसमानाधिकरणात्यन्ताभावाप्रतियोगिपरद्रव्याद्यवच्छिन्ननास्तित्वविशिष्टयुगपत्स्वपरद्रव्याद्यवच्छिन्नसत्त्वासत्त्वविषयकावक्तव्यत्ववानिति बोधः॥

स्यादस्ति नास्ति चावक्तव्यश्च घट इति सप्तमं वाक्यन्तु क्रमार्पितस्वपरद्रव्यादीन् सहार्पितस्वपरद्रव्यादीनाश्रित्यास्तित्वनास्तित्वविशिष्टावक्तव्य-



त्ववद्घटमाह । तथा च तादृशो घटः प्रतियोग्यसमानाधिकरणघटत्वसमानाधिकरणात्यन्ताभावाप्रतियोगिक्रमार्पितस्वपरद्रव्याद्यवच्छिन्नास्तित्वनास्तित्वोभयविशिष्टसहार्पितस्वपरद्रव्याद्यवच्छिन्नास्तित्वनास्तित्वोभयधर्मविषयकावक्तव्यत्ववान् घट इति बोधः ॥

अत्र सर्वत्र घटस्य स्वरूपं अयं घट इति ज्ञानीयप्रकारताश्रयान्यूनानतिप्रसक्तं घटत्वमेव, तादृशप्रकारत्वानाश्रयं विशेष्यावृत्ति च पटत्वादिकं पररूपं, न तु तद्भिन्नत्वमात्रं, द्रव्यत्वादीनां पररूपत्वापत्तेः। घटादीनाञ्च पररूपादिनापि सत्त्वे पदार्थत्वव्याघातप्रसङ्गः, स्वपररूपग्रहणव्यवच्छेदाभ्यां हि पदार्थत्वं व्यवस्थाप्यम् ॥

एवं तन्निष्ठाः स्थौल्यादिधर्मवर्तमानकालीनपर्यायपृथुबुध्नोदराद्याकाररूपादिगुणघटनक्रियाकर्तृत्वादयः स्वरूपा अन्ये पररूपा बोध्याः ॥

एवं शुद्धं मृद्द्रव्यं घटस्य स्वद्रव्यं, तद्भिन्नं स्वर्णादि परद्रव्यम् । तद्रूपेणापि घटादीनां सत्त्वे द्रव्यस्य प्रतिनियमो न स्यात् ॥

एवं घटस्य निजं क्षेत्रं भूतलादि परक्षेत्रं तद्भिन्नं

कुड्यादि। स्वक्षेत्र इव परक्षेत्रेऽपि सत्त्वे क्षेत्रनियमानुपपत्तिप्रसङ्गः॥

एवं वर्तमानकाल एव घटस्य कालस्तद्भिन्नातीतादिः परकालः। स्वकालवत्परकालेऽपि घटस्य सत्त्वे प्रतिकालनियमानुपपत्तिः प्रसज्येत ॥

इति सप्तभङ्गीनिरूपणम् ॥

अनाप्तपुरुषप्रणीतवचनसम्भूतमयथार्थशाब्दज्ञानमागमाभासः॥ तद्वचनमप्यागमाभासम् ॥

समाप्तमागमनिरूपणम् ॥

ज्ञानस्य प्रामाण्यं प्रमेयाव्यभिचारित्वमेव। स्वातिरिक्तग्राह्यापेक्षया प्रमेयव्यभिचारित्वं ज्ञानस्याप्रामाण्यम्। सर्वन्तु ज्ञानं स्वापेक्षया प्रमाणमेव। बाह्यार्थापेक्षया तु किञ्चित्प्रमाणं किञ्चिचाप्रमाणम्॥

प्रामाण्याप्रामाण्ये च स्वकारणवृत्तिगुणदोषापेक्षयोत्पत्तौ परत एव। ज्ञप्तौ त्वनभ्यासदशापन्ने परतोऽभ्यासदशापन्ने च स्वत एवेति ॥

परिच्छेद्यमस्य प्रमाणस्य सामान्यविशेषाद्यनेकान्तात्मकं वस्तु। तत्र सामान्यं द्विविधं तिर्यक्सामान्यमूर्ध्वतासामान्यं चेति। व्यक्तिषु सदृशी परिणतिस्तिर्यक्सामान्यं। यथा शुक्लकृष्णादिगोव्यक्तिषु



गौर्गौरिति प्रतीतिसाक्षिको गोत्वादिधर्मः। प्रमाणं चात्र गौर्गौरिति प्रत्ययो विशिष्टनिमित्तनिबन्धनः विशिष्टबुद्धित्वादिति ॥

पूर्वोत्तरपरिणामानुगामि द्रव्यमूर्ध्वतासामान्यम्। यथा कटककंकणादिपरिणामेषु काञ्चनमिति प्रतीतिसाक्षिकं काञ्चनद्रव्यम् ॥

विशेषोऽपि द्विविधो गुणः पर्यायश्चेति ॥

सहभावी गुणः यथा आत्मन उपयोगादयः पुद्गलस्य ग्रहणगुणो धर्मास्तिकायादिनाञ्च गतिहेतुत्वादयः ॥

क्रमभावी पर्यायः। यथा सुखदुःखहर्षविषादादयः ॥

अभिन्नकालवर्त्तिनो गुणाः, विभिन्नकालवर्त्तिनस्तु पर्यायाः ॥

अत्र य एव सुखादयो गुणास्त एव पर्याया इति कथं भेद इति नो वाच्यम् कालभेदेन तद्भेदस्यानुभवात् ॥

प्रमाणजन्यं फलं द्विविधमनन्तरं परम्परमिति। अज्ञाननिवृत्तिरनन्तरफलम्। केवलिनामपि प्रतिक्षणं अशेषार्थविषयाज्ञाननिवृत्तिरूपपरिणतिर-

स्त्येव। अन्यथा द्वितीयादिसमये तदनभ्युपगमे अज्ञत्वप्रसङ्गः ॥

केवलज्ञानस्य परम्परफलं माध्यस्थ्यं हानोपादानेच्छाया अभावात्। तीर्थकरत्वनामोदयात्तु हितोपदेशप्रवृत्तिः। सुखन्तु न केवलज्ञानस्य फलं, अशेषकर्मक्षयस्य फलत्वात् ॥

तद्भिन्नप्रमाणानान्तु हानोपादानोपेक्षाबुद्धयः फलम् ॥

फलञ्च प्रमाणात् भिन्नाभिन्नं, प्रमाणतया परिणतस्यैवात्मनः फलत्वेन परिणमनात्तयोः कथञ्चिदभेदः। कार्यकारणभावेन प्रतीयमानत्वाच्च कथञ्चिद्भेदः ॥

इति समाप्तं प्रमाणनिरूपणम् ॥

प्रमाणञ्च निश्चयात्मकमेव, आरोपविरोधित्वात्।

अतत्प्रकारके वस्तुनि तत्प्रकारकत्वज्ञानमारोपः। स त्रिधा विपर्ययसंशयानध्यवसायभेदात् ॥

अन्यथास्थितवस्त्वेककोटिमात्रप्रकारकनिश्चयो विपर्ययः, यथा शुक्ताविदं रजतमिति ज्ञानम् ॥

अत्र हि स्मरणोपढौकितं रजतं तद्देशतत्कालयोरविद्यमानमपि दोषमहिम्ना सन्निहितत्वेन भा-



सत इति विपरीताख्यातिरूपमिदम्। स्मरणञ्च चाकचिक्यादिसमानधर्माणां शुक्तौ दर्शनाद्भवति ॥

एवं बाष्पधूलीपटलादौ धूमभ्रमाद्वह्निविरहिते देशे वह्न्यनुमानमयं देशो वह्निमानिति। क्षणिकाक्षणिके वस्तुनि बौद्धागमात्सर्वथा क्षणिकत्वज्ञानं, भिन्नाभिन्नयोर्द्रव्यपर्याययोर्नैयायिकवैशेषिकशास्त्रत एकान्तभेदज्ञानं, नित्यानित्यात्मके शब्दे मीमांसकशास्त्रत एकान्तनित्यत्वज्ञानमित्यादीनि विपरीतोदाहरणानि ॥

अनिश्चितनानांशविषयकं ज्ञानं संशयः। यथा स्थाणुर्वा पुरुषो वेति ज्ञानम्। इदञ्च स्थाणुत्वपुरुषत्वान्यतरनिश्चायकप्रतिषेधकप्रमाणाभावादारोह--परिणाहात्मकसाधारणधर्मदर्शनात्कोटिद्वयविषयकस्मरणाच्च समुन्मिषति। अयं प्रत्यक्षधर्मिकः संशयः। परोक्षधर्मिविषयको यथा क्वचिद्वनप्रदेशे शृङ्गमात्रदर्शनेन किं गौरयं गवयो वेति संशयः ॥

विशिष्टविशेषास्पर्शि ज्ञानमनध्यवसायः। यथा गच्छता मार्गे किमपि मया स्पृष्टमिति ज्ञानम्। अयमनध्यवसायः प्रत्यक्षविषयः। परोक्षविषयस्तु गोजातीयपरिज्ञानविधुरस्य विपिननिकुञ्जे सास्नामात्रदर्शनेन सामान्यतः पिण्डमात्रमनुमाय प्रदेशोऽ-

स्मिन् कोऽयं प्राणीति विशेषानुल्लेखि ज्ञानम् । अनिश्चितानेककोटिविषयकः संशयः । सर्वथा कोट्यविषयकोऽनध्यवसाय इत्यनयोर्भेदः । तथा अनवस्थितानेकांशाप्रकारके वस्तुनि अनवस्थितानेकांशप्रकारकत्वावगाहनात्संशयः आरोपरूपः । अनध्यवसायस्य संशयविपर्ययात्मकारोपेण सहायथार्थपरिच्छेदकत्वसाम्यादारोपरूपत्वमुपचारवृत्त्या भाव्यम् ॥

इत्यारोपनिरूपणम्

श्रुताख्यप्रमाणबोधितांशग्राहकोऽनिराकृतेतरांशो वक्तुरभिप्रायविशेषो नयः । यथार्थवस्त्वैकदेशग्राहकत्वान्नयस्य यथार्थनिर्णयत्वरूपप्रमाणत्वं नास्त्येव । अत एव च नाप्रमाणत्वम् । अपि तु प्रमाणाप्रमाणाभ्यां भिन्नं ज्ञानान्तरमेव ॥

स च नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूतभेदात्सप्तविधः ॥

आद्यास्त्रयो द्रव्यार्थिकनयाः, परे चत्वारः पर्यायार्थिकनयाः । द्रव्यमात्रविषयकत्वात्पर्यायमात्रविषयकत्वाच्च । गुणानां पर्यायेऽन्तर्भावः । ऊर्ध्वतासामान्यस्य द्रव्येऽन्तर्भावः, तिर्यक्सामान्यस्य तु व्यञ्जनपर्यायरूपस्य पर्यायेऽन्तर्भावः । स्थूलाः कालान्तस्थायिनः शब्दानां संकेतविषया व्यञ्जनपर्याया इति प्रावचनिकप्रसिद्धिः । अतो नाधिकनयशङ्का ॥



तत्र गौणमुख्यभावेन धर्मद्वयधर्मिद्वयधर्मधर्म्युभयान्यतमविषयकं विवक्षणं नैगमनयः । यथा पर्वते पर्वतीयवह्निरिति । अत्र वह्न्यात्मको धर्मः प्रधानं विशेष्यत्वात् पर्वतीयत्वरूपव्यञ्जनपर्यायो गौणो वह्निविशेषणत्वात् । एवमनित्यज्ञानमात्मनः, घटे नीलं रूपमित्यादयो धर्मद्वयविषयकदृष्टान्ता भाव्याः ॥

काठिन्यवद्द्रव्यं पृथिवीत्यादौ पृथिवीरूपधर्मिणो विशेष्यत्वान्मुख्यत्वं काठिन्यवद्द्रव्यस्य विशेषणत्वाद्गौणत्वम् । यद्वा काठिन्यवद्द्रव्यस्य विशेष्यत्वान्मुख्यता पृथिव्या विशेषणत्वाद्गौणता । एवं रूपवद्द्रव्यं मूर्तं, पर्यायवद्द्रव्यं वस्त्वित्यादीनि धर्मिद्वयविषयकविवक्षणे उदाहरणानि ॥

रूपवान् घट इत्यत्र तु घटस्य धर्मिणो विशेष्यत्वात्प्रधानता, रूपस्य धर्मस्य तद्विशेषणत्वाद्गौणता । इत्थं ज्ञानवानात्मा नित्यसुखी मुक्तः क्षणिकसुखी विषयासक्तजीव इत्यादीनि धर्मधर्म्युभयविषयकविवक्षणे निदर्शनानि ॥

स्वव्याप्ययावद्विशेषेष्वौदासीन्यपूर्वकं सामान्यविषयकाभिप्रायविशेषः सङ्ग्रहः । स द्विविधः परापरभेदात् ॥

परसामान्यमवलम्ब्य विधायौदासीन्यं तद्विशेषेषु अर्थानामेकतया ग्रहणाभिप्रायः परसङ्ग्रहः। यथा विश्वमेकं सदविशेषादिति। अनेन वक्त्रभिप्रायेण सत्त्वरूपसामान्येन विश्वस्यैकत्वं गृह्यते। एवं शब्दानामप्रयोगाच्च विशेषेषूदासीनता प्रतीयते॥

अपरसामान्यमवलम्ब्य तथाभिप्रायोऽपरसङ्ग्रहः। यथा धर्माधर्माकाशकालपुद्गलजीवानामैक्यं, द्रव्यत्वाविशेषादिति।

अनेनाप्यभिप्रायेण द्रव्यत्वरूपापरसामान्येन धर्मादीनामेकत्वं तद्विशेषेषूदासीनत्वञ्च गृह्यते॥

प्रतिषेधपरिहारेण सङ्ग्रहविषयीभूतार्थविषयकविभागप्रयोजकाभिप्रायो व्यवहारनयः। यथा सत्त्वधर्मेणैकतया संगृहीतस्य सतः द्रव्यपर्यायाभ्यां विभागकरणाभिप्रायो यत्सत् तद्विधा द्रव्यं पर्यायश्चेति। एवं द्रव्यत्वेन सङ्गृहीतस्य द्रव्यस्य धर्मादिरूपेण षोढा विभागकरणाभिप्रायो यद्द्रव्यं तद्धर्मादिरूपेण षोढेति॥

द्रव्यं गौणीकृत्य प्राधान्यतया वर्तमानक्षणवृत्तिपर्यायमात्रप्रदर्शनाभिप्रायविशेषः ऋजुसूत्रनयः। यथा सम्प्रति सुखपर्यायोऽस्ति दुःखपर्यायोऽस्ति, द्वेषपर्यायो वास्तीत्यभिप्रायाः। अत्र हि सद-



प्यात्मद्रव्यं नार्प्यते सुखादिपर्यायांस्तु प्रधानेन प्रकाश्यत इति॥

कालकारकलिङ्गसंख्यापुरुषोपसर्गाणां भेदेन सन्तमप्यभेदमुपेक्ष्यार्थभेदस्य शब्दप्राधान्यात्प्रदर्शकाभिप्रायविशेषः शब्दनयः। यथा बभूव भवति भविष्यति सुमेरुरिति कालभेदेन सुमेरुभेदं, करोति कुम्भं क्रियते कुम्भ इत्यादौ कर्तृत्वकर्मत्वरूपकारकभेदात्कुम्भभेदं, पुष्यस्तारका इत्यादौ लिङ्गभेदेनार्थभेदं, आपोऽम्भ इत्यादौ संख्याभेदेन जलस्य भेदं, एहि मन्ये रथेन यास्यसि नहि यास्यसि यातस्ते पितेत्यादौ मध्यमोत्तमरूपपुरुषभेदेनार्थभेदं, सन्तिष्ठतेऽवतिष्ठत इत्यादावुपसर्गभेदेन चार्थभेदं प्रतिपादयति शब्दनयः कालादिप्राधान्यात्। अभेदं पुनर्न तिरस्करोति अपि तु गौणीकरोति॥ पर्यायभेदे तु नार्थभेदमभ्युपैति नयोऽयम्॥

निर्वचनभेदेन पर्यायशब्दानां विभिन्नार्थाभ्युपगमाभिप्रायस्समभिरूढनयः। यथा इन्दनादिन्द्रः शकनाच्छक्रः पूर्दारणात्पुरन्दर इत्यादयः। अत्र हि परमैश्वर्यवत्वसमर्थत्वामरपुरविभेदकत्वरूपप्रवृत्तिनिमित्तमाश्रित्यैषां शब्दानां भिन्नार्थत्वाभ्युपगमः अस्य नयस्य विषयः। अत्राप्यभेदस्य न निरासः॥

तत्तत्क्रियाविधुरस्यार्थस्य तत्तच्छब्दवाच्यत्वमप्रतिक्षिपन् शब्दानां स्वस्वप्रवृत्तिनिमित्तक्रियाविशिष्टार्थाभिधायित्वाभ्युपगम एवम्भूतनयः । यथा परमैश्वर्यप्रवृत्तिविशिष्ट इन्द्रशब्दवाच्यः सामर्थ्यक्रियाविशिष्टश्शक्रपदबोध्यः, असुरपुरभेदनक्रियाविशिष्टः पुरन्दरशब्दवाच्य इत्येवंरूपाभिप्रायाः ॥

तत्राद्याश्चत्वारो नया अर्थनया अर्थप्रधानत्वात् अन्त्ये त्रयस्तु शब्दनयाः शब्दवाच्यार्थविषयत्वात् ॥

नैगमो भावाभावविषयकः, सङ्ग्रहस्सर्वभावविषयकः, व्यवहारः कालत्रयवृत्तिकतिपयभावप्रकारप्रख्यापकः, वर्तमानक्षणमात्रस्थायिपदार्थविषय ऋजुसूत्रः, कालादिभेदेन भिन्नार्थविषयश्शब्दनयः, व्युत्पत्तिभेदेन पर्यायशब्दानां विभिन्नार्थतासमर्थनपरः समभिरूढः, क्रियाभेदेन विभिन्नार्थतानिरूपणपर एवंभूतनय इत्युत्तरोत्तरनयापेक्षया पूर्वपूर्वनयस्य महाविषयत्वं बोध्यम् ॥

धर्मद्वयधर्मिद्वयधर्मधर्मिद्वयानां सर्वथा पार्थक्याभिप्रायो नैगमाभासः यथा वह्निपर्वतवृत्तित्वयोः अनित्यज्ञानयोः रूपनैल्ययोः आत्मवृत्तिसत्त्वचैतन्ययोः काठिन्यवद्द्रव्यपृथिव्योः रूपवद्द्रव्यमूर्तयोः पर्यायवद्द्रव्यवस्त्वोः ज्ञानात्मनोः नित्यसुखमुक्तयोः



क्षणिकसुखविषयासक्तजीवयोश्च सर्वथा भेदाभिप्रायः । वैशेषिकनैयायिकयोर्दर्शनमेतदाभास एव ॥

परसामान्यमपरसामान्यं वाभ्युपगम्य तद्विशेषनिराकरणाभिप्रायः सङ्ग्रहनयाभासः । यथा जगदिदं सदेव तद्व्याप्यधर्मानुपलम्भादिति । अद्वैतसांख्यदर्शने एतदाभासरूपे । एवं द्रव्यमेव तत्त्वं तद्विशेषाणामदर्शनादित्यादयोऽभिप्रायविशेषाः ॥

काल्पनिकद्रव्यपर्यायाभिमन्ता व्यवहाराभासः । यथा चार्वाकदर्शनम् । तत्र हि काल्पनिकभूतचतुष्टयमात्रविभागो दृश्यते । प्रमाणसंपन्नजीवद्रव्यपर्यायादिविभागस्तिरस्क्रियते ॥

कालत्रयस्थायिपदार्थव्युदसनपूर्वकं वर्तमानक्षणमात्रवृत्तिपर्यायावलम्बनाभिप्राय ऋजुसूत्रनयाभासः । यथा बौद्धदर्शनम् । बुद्धो हि क्षणमात्रस्थायिनमेव पदार्थं प्रमाणतया स्वीकरोति तदनुगामिप्रत्यभिज्ञाप्रमाणसिद्धमेकं स्थिरभूतं द्रव्यं नाभ्युपैति ॥

कालादिभेदेन शब्दस्य भिन्नार्थवाचित्वमेवेति अभेदव्युदसनाभिप्रायः शब्दनयाभासः । यथा बभूव भवति भविष्यति सुमेरुरित्यादौ भूतवर्तमानभविष्यत्कालीनान् भिन्नभिन्नानेव प्रमाणविरुद्धान् रत्नसानूनभिदधति तत्तच्छब्दा इत्याद्यभिप्रायः ॥

पर्यायशब्दानां निरुक्तिभेदेन भिन्नार्थत्वमेव न त्वर्थगतोऽभेदोपीति योऽभिप्रायः स समभिरूढनयाभासः। यथा शक्रपुरन्दरेन्द्रशब्दानां भिन्नाभिधेयत्वमेव भिन्नशब्दत्वादित्यभिप्रायः॥

प्रवृत्तिनिमित्तक्रियाविरहितमर्थं शब्दवाच्यतया सर्वथानभ्युपगच्छन्नभिप्रायविशेष एवम्भूतनयाभासः। यथा घटनादिक्रियाविरहितघटादेर्घटादिशब्दवाच्यत्वव्युदासाभिप्राय इति॥

नयस्येदृशस्य वस्त्वैकदेशस्याज्ञाननिवृत्तिरनन्तरफलम्। परम्परफलन्तु वस्त्वैकदेशविषयकहानोपादानोपेक्षाबुद्धयः। उभयविधमपि फलं नयात्कथञ्चित् भिन्नाभिन्नं विज्ञेयम्॥

इति नयनिरूपणम्॥

स्वपरपक्षसाधनदूषणविषयं तत्त्वनिर्णयविजयान्यतरप्रयोजनं वचनं वादः। साधनात्मकं दूषणात्मकञ्च वचनं स्वस्वाभिप्रेतप्रमाणरूपमेव स्यात्। तदन्यस्य प्रमाणाभासत्वान्निर्णायकत्वानुपपत्तेः। जल्पवितण्डयोस्तु न कथान्तरत्वं वादेनैव चरितार्थत्वात्॥

कथारम्भकस्तु जिगीषुस्तत्त्वनिर्णिनीषुश्च। अङ्गीकृतधर्मसाधनाय साधनदूषणवचनैर्विजयमिच्छुर्जिगीषुः॥



स्वीकृतधर्मस्थापनाय साधनदूषणवचनैस्तत्त्वसंस्थापनेच्छुः तत्त्वनिर्णिनीषुः। अयं स्वस्य संदेहादिसंभवे स्वात्मनि तत्त्वनिर्णयं यदेच्छति तदा स्वात्मनि तत्त्वनिर्णिनीषुर्भवति। परानुग्रहार्थं परस्मिन् तत्त्वनिर्णयं यदेच्छति तदा परात्मनि तत्त्वनिर्णिनीषुर्भवति॥

स्वात्मनि तत्त्वनिर्णिनीषुः शिष्यसब्रह्मचारिसुहृदादयः। परस्मिन् तत्त्वनिर्णिनीषुश्च गुर्वादिः। अयं ज्ञानावरणीयकर्मणः क्षयोपशमात् समुत्पन्नमत्यादिज्ञानवान् केवलज्ञानवान् वा भवति। स्वात्मनि तत्त्वनिर्णिनीषुस्तु क्षायोपशमिकज्ञानवानेव। जिगीषुरप्येवमेव॥

एवमेव प्रत्यारम्भकोऽपि विज्ञेयः॥

तथा च आरम्भको जिगीषुः स्वात्मनि तत्त्वनिर्णिनीषुः क्षायोपशमिकज्ञानवान् केवली चेति चतुर्विधः सम्पन्नः, एवं प्रत्यारम्भकोऽपि॥

यदोभावपि जिगीषू, जिगीषुक्षायोपशमिकज्ञानिनौ, जिगीषुकेवलिनौ वा वादिप्रतिवादिनौ भवतः, तदा वादिप्रतिवादिसभ्यसभापतिरूपाणि चत्वार्यङ्गान्यपेक्षितानि॥

यदा स्वात्मनि तत्त्वनिर्णिनीषुर्वादी प्रतिवादी

७

च परत्र तत्त्वनिर्णिनीषुः क्षायोपशमिकज्ञानवान् तदा समर्थश्चेत्प्रतिवादी वादिप्रतिवादिरूपाङ्गद्वयमेवापेक्षितम्। असमर्थश्चेत् सभ्येन सहाङ्गत्रयमपेक्षितम्। केवली चेत्प्रतिवादी तदाऽङ्गद्वयमेव ॥

यदा क्षायोपशमिकज्ञानवान् परत्र तत्त्वनिर्णिनीषुर्वादी प्रतिवादी च जिगीषुस्तदा चत्वार्यङ्गानि, स्वात्मनि तत्त्वनिर्णिनीषुः क्षायोपशमिकज्ञानवान् परत्र तत्त्वनिर्णिनीषुर्वा प्रतिवादी तदा असमर्थत्वेऽङ्गत्रयं समर्थत्वे च अङ्गद्वयं, केवली चेत्प्रतिवादी तदा अङ्गद्वयमपेक्षितम् ॥

यदा तु केवली वादी जिगीषुश्च प्रतिवादी तदा चत्वार्यङ्गानि, स्वात्मनि तत्त्वनिर्णिनीषुः क्षायोपशमिकज्ञानवान्वा प्रतिवादी तदाऽङ्गद्वयमेवापेक्षितम् ॥

जिगीषुस्वात्मतत्त्वनिर्णिनीष्वोः, स्वात्मतत्त्वनिर्णिनीषुजिगीष्वोः, स्वात्मतत्त्वनिर्णिनीष्वोरुभयोरुभयोश्च केवलिनोर्वादिप्रतिवादिभावासम्भवान्न वादः प्रवर्तते ॥

प्रथमं वादारम्भको वादी। तदनु तद्विरुद्धारम्भकः प्रतिवादी। एतौ स्वपरपक्षस्थापनप्रतिषेधौ प्रमाणतः कुर्वीयाताम् ॥

उभयसिद्धान्तपरिज्ञाता धारणावान् बहुश्रुतः



स्फूर्तिमान् क्षमी मध्यस्थः सभ्यः। वादोऽयं त्रिभिः सभ्यैरन्यूनो भवेत् ॥

सभ्यैरेतैः यथायोगं वादिप्रतिवादिनोः प्रतिनियतवादस्थाननियमनं, कथाविशेषनियमनं, पूर्वोत्तरवादनिर्देशः, तद्वचनगुणदोषावधारणं, तत्त्वप्रकाशनेन यथासमयं वादविरामः, जयपराजयप्रकाशनञ्च कार्यम् ॥

प्रज्ञाऽऽज्ञासम्पत्तिसमताक्षमालङ्कृतः सभापतिः। अनेन च वादिप्रतिवादिभ्यां सभ्यैश्च प्रतिपादितस्यार्थस्यावधारणं, तयोः कलहनिराकरणं तयोश्शपथानुगुणं पराजितस्य शिष्यत्वादिनियमनं पारितोषिकादिवितरणञ्च कर्त्तव्यम् ॥

इति वादनिरूपणम्।

पूर्वागमान् पुरस्कृत्य भेदलक्षणतो दिशा।
बालसंवित्प्रकाशाय सम्यक्संवित्प्रकाशिता ॥



चरणकरणभेदेन द्विविधं सम्यक् चरणम् ।

व्रतश्रमणधर्मसंयमवैयावृत्यब्रह्मचर्यगुप्तिज्ञानादितपःक्रोधनिग्रहरूपेण नवविधोऽप्यवान्तरभेदतस्सप्ततिविधं चरणम् ॥

हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरमणरूपाणि पञ्च व्रतानि ॥

प्रमादसहकारेण कायादिव्यापारजन्यद्रव्यभावात्मकप्राणव्यपरोपणं हिंसा तस्मात्सम्यग्ज्ञानश्रद्धानपूर्विका निवृत्तिः प्रथमं व्रतम् ॥

अतद्वति तत्प्रकारकमप्रियमपथ्यं वचनमनृतं, तस्मात्तथा विरतिर्द्वितीयं व्रतम् । असत्यं चतुर्विधं भूतनिह्नवाभूतोद्भावनार्थान्तरगर्हाभेदात् । आद्यं आत्मा पुण्यं पापं वा नास्तीत्यादिकम् । आत्मा सर्वगत इत्यादि द्वितीयम् । गव्यश्वत्ववचनं तृतीयम् । क्षेत्रं कृष काणं प्रति काण इत्यादि वचनं तुर्यम् ॥

स्वाम्याद्यदत्तवस्तुपरिग्रहणं स्तेयं तस्मात्तथा विरतिस्तृतीयं व्रतम् ॥

औदारिकवैक्रियशरीरविलक्षणसंयोगादिजन्यविषयानुभवनमब्रह्म, तस्मात्तथा विरतिस्तुर्यं व्रतम् ॥

सचित्ताचित्तमिश्रेषु द्रव्येषु मूर्च्छा परिग्रहस्तत्तश्च तथा विरतिः पञ्चमं व्रतम् ॥



क्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिञ्चन्यब्रह्मचर्याणि श्रमणधर्मा दश ॥

सति सामर्थ्ये सहनशीलता क्षमा । सापराधिन्यप्युपकारबुद्धिरवश्यंभावित्वमतिरपायेषु, क्रोधादिषु दुष्टफलकत्वज्ञानं, आत्मनिन्दाश्रवणेऽप्यविकृतमनस्कत्वं क्षमैवात्मधर्म इति बुद्धिश्च क्षमायामुपकारिका ॥

गर्वपराङ्मुखस्य श्रेष्ठेष्वभ्युत्थानासनादिभिर्विनयाचरणं मार्दवम् । जातिरूपैश्वर्यकुलतपःश्रुतलाभवीर्येष्वहम्भावो मार्दवविरोधी । अतस्ततो निवर्तेत ॥

कालुष्यविरहश्शौचम् । तद् द्रव्यभावभेदाद्विधा । शास्त्रीयविधिना यतिजनशरीरगतमहाव्रणादिक्षालनमाद्यम् । रजोहरणादिष्वपि ममताविरहो द्वितीयं, ममत्वमत्र मनःकालुष्यम् ॥

यथावस्थितार्थप्रतिपत्तिकरं स्वपरहितं वचः सत्यम् ॥

इन्द्रियदमनं संयमः । तपस्तु पूर्वमेवोक्तम् ॥

बाह्याभ्यन्तरोपधिशरीरान्नपानादिविषयकभावदोषपरित्यजनं त्यागः ॥

शरीरधर्मोपकरणादिषु मूर्च्छाराहित्यमाकिञ्चन्यम् ॥

व्रतपरिपालनाय ज्ञानाभिवृद्धये कषायपरिपापाकाय च गुरुकुलवासो ब्रह्मचर्यम् ॥

सनियमं शरीरवाङ्मनोनिग्रहस्संयमः । स च सप्तदशविधः पृथिव्यप्तेजोवायुवनस्पतिकायद्वित्रिचतुःपञ्चेन्द्रियप्रेक्ष्योपेक्ष्यापहृत्यप्रमृज्यकायवाङ्मनउपकरणसंयमभेदात् ॥

तत्र पृथिवीकायिकादारभ्य पञ्चेन्द्रियं यावद्ये नवविधा जीवाः तेषां करणत्रयैः कृतकारितानुमतिभिः संघट्टपरितापव्यापत्तिपरिहारः पृथिवीकायादि संयमो नवविधो ज्ञेयः ॥

स्थानादीन् विलोक्य क्रियाचरणं प्रेक्ष्यसंयमः । साधुप्रभृतीन् प्रवचनोदितक्रियासु व्यापारयतः स्वस्वक्रियासु व्यापारवतः गृहस्थादीनुपेक्षमाणस्य संयम उपेक्ष्यसंयमः ॥

चरणानुपकारकवस्तुनिग्रहो विधिना च प्राणिसंसक्तभक्तपानादिपरित्यजनमपहृत्यसंयमः ॥

दृषिदृष्टस्थण्डिलवस्त्रादीनां विशिष्टप्रदेशगमने रजोऽवगुण्ठितपादादीनाञ्च रजोहरणादिना प्रमार्जनं प्रमृज्यसंयमः ॥

धावनादिदुष्टक्रियानिवृत्तिशुभक्रियाप्रवृत्त्युभयरूपः कायसंयमः । हिंस्रपरुषादिनिवृत्तिशुभवा-



क्प्रवृत्त्युभयरूपो वाक्संयमः । अभिद्रोहादिनिवृत्तिपूर्वकधर्मध्यानादिप्रवृत्तिर्मनस्संयमः ॥

पुस्तकाद्यजीवकायसंयम उपकरणसंयमः ।

शास्त्रोदितविधिना गौरवजनकक्रियानुष्ठानप्रवृत्तिर्वैयावृत्त्यम् । तच्च आचार्योपाध्यायतपस्विशैक्षकग्लानगणकुलसङ्घसाधुसमनोज्ञसम्बन्धित्वाद्दशविधम् ॥

ज्ञानाद्याचारे प्रधान आचार्यः । स पञ्चविधः प्रव्राजको दिगाचार्यः श्रुतोद्देष्टा श्रुतसमुद्देष्टाऽऽम्नायार्थवाचकश्चेति ॥

सामायिकादिव्रतारोपयिता प्रव्राजकः । सचित्ताचित्तमिश्रवस्त्वनुज्ञायी दिगाचार्यः । प्रथमत आगमोपदेष्टा श्रुतोद्देष्टा । उद्दिष्टगुर्वाद्यभावे स्थिरपरिचितकारयितृत्वेन सम्यग्धारणानुप्रवचनेन च तस्यैवागमस्य समुद्देष्टा अनुज्ञाता वा श्रुतसमुद्देष्टा । आम्नायस्योत्सर्गापवादात्मकार्थप्रवक्ता आम्नायार्थवाचकः ॥

आचारविषयविनयस्य स्वाध्यायस्य वाऽऽचार्यानुज्ञया साधूनामुपदेशक उपाध्यायः ।

किञ्चिदूनषण्मासान्तोग्रतपोऽनुष्ठाता तपस्वी । अनारोपितविविक्तव्रतः शिक्षायोग्यश्शैक्षिकः । अ-

पट्टुर्व्याध्याक्रान्तो मुनिर्ग्लानः । श्रुतस्थविरपरम्परानुयायी गणः। एकजातीयानेकगच्छसमूहः कुलम्। ज्ञानदर्शनचरणगुणवान् श्रमणादिः सङ्घः । ज्ञानादिपौरुषेयशक्तिभिर्मोक्षसाधकः साधुः । एकसमाचारीसमाचरणपरस्साधुस्समनोज्ञः ॥

वसतिकथानिषद्येन्द्रियकुड्यन्तरपूर्वक्रीडितप्रणीतातिमात्राहारभूषणगुप्तिभेदेन ब्रह्मचर्यगुप्तिर्नवधा ॥

स्त्रीषण्डादिवासस्थानवर्जनं वसतिगुप्तिः। रागानुबन्धिस्त्रीसंलापचरित्रवर्णनपरित्यागः कथागुप्तिः । स्त्र्यासनपरिवर्जनं निषद्यागुप्तिः । रागप्रयुक्तस्त्र्यङ्गोपाङ्गविलोकनत्यजनमिन्द्रियगुप्तिः । एककुड्यान्तरितमैथुनशब्दश्रवणस्थानपरित्यागः कुड्यन्तरगुप्तिः। प्राक्तनतत्क्रीडास्मरणवैधुर्यं पूर्वक्रीडितगुप्तिः। अतिस्निग्धमधुराद्याहारपरिहारः प्रणीतगुप्तिः। मानाधिकाहारपरिवर्जनमतिमात्राहारगुप्तिः । स्नानविलेपनादिशरीरशुश्रूषावर्जनं भूषणगुप्तिः ॥

ज्ञानदर्शनचरणभेदतो ज्ञानादि त्रिविधम् ।

कर्मक्षयोपशमसमुत्थावबोधतद्धेतुद्वादशाङ्गाद्यन्यतरत् ज्ञानम् । तत्त्वश्रद्धानं दर्शनम् । पापव्यापारेभ्यो ज्ञानश्रद्धानपूर्वकविरतिश्चरणम् ॥



बाह्याभ्यन्तरभेदेन द्वादशविधानि तपांसि पूर्वमेवोक्तानि ॥

उदीर्णक्रोधादिचतुष्टयनिग्रहः क्रोधनिग्रहः ॥

इति चरणनिरूपणम् ॥

पिण्डविशुद्धिसमितिभावनाप्रतिमेन्द्रियनिरोधप्रतिलेखनागुप्त्यभिग्रहभेदेनाष्टविधमपि करणमवान्तरभेदात्सप्ततिविधम् ॥

सर्वदोषरहिताऽऽहारोपाश्रयवस्त्रपात्रपरिग्रहात्मिकाश्चतस्रः पिण्डविशुद्धयः ॥

साध्वाचरणे शास्त्रोदितविधिना सम्यक्प्रवृत्तिः समितिः । सा चेर्यादिरूपा पञ्चविधा पूर्वमेवोक्ता वेदितव्या ॥

धर्मार्थं चित्तस्थिरीकरणहेतुर्विचारो भावना । द्वादशविधा सा चेत्थम् ॥

बाह्यान्तरनिखिलपदार्थेष्वनित्यत्वचिन्तनमनित्यभावना । अनया चैषां संयोग आसक्तिर्विप्रयोगे च दुःखमपि पुरुषस्य न स्यात् ॥

जन्मजरामरणादिजन्यदुःखपरिवेष्टितस्य जन्तोस्संसारे क्वापि अर्हच्छासनातिरिक्तं किमपि शरणं न विद्यत इति भावनाऽशरणभावना । एवं भावयतः सांसारिकेषु भावेषु वैराग्यं समुत्पद्येत ॥

संसारे बम्भ्रम्यमाणानां जनानां सर्व एव स्वजनाः परजनाश्चेति विचारः संसारभावना । एवं विचारयतः केष्वपि ममत्वाभावान्निर्विण्णस्य संसारपरिहाराय यत्न उदीयात् ॥

एक एवाहं जाये म्रिये न मे कश्चिदात्मीयः परो वा, न वा कश्चिन्मदीयं दुःखाद्यपहर्तुं प्रभवतीत्येवं विचिन्तनमेकत्वभावना । अनया च निःसङ्गतां यायात् ॥

वैधर्म्येण शरीरभिन्नतयाऽऽत्मानुचिन्तनमन्यत्वभावना । अनया च देहात्माभिमाननिवृत्तिर्जायेत ॥

अशुचिमयः कायोऽशुचिहेतुकोऽशुचिस्यन्दी चेति विचारोऽशुचिभावना । एतया च शरीरविषये निर्ममत्वं स्यात् ॥

इन्द्रियाद्याश्रवद्वारा कर्मागमनचिन्तनमाश्रवभावना । अनया चाश्रवनिरोधाय यतेत ॥

आश्रवदोषास्सर्वे पापोपार्जननिरोधपटिष्ठसंवरवतो नैव स्पृशन्तीति विलोकनं संवरभावना । अनया च संवराय घटेत ॥

नरकादिषु कर्मफलविपाकोदयोऽबुद्धिपूर्वकः तपः



परीषहादिकृतश्च कुशलमूल इति विभावनं निर्जरभावना । अनया च कर्मपरिक्षयाय यतेत ॥

पञ्चास्तिकायरूपानेकपरिणाम्युत्पादव्ययध्रौव्यात्मकं लोकं विचित्रस्वभावमिति विचारणा लोकभावना । एतया च निर्ममत्वमुदीयात् ॥

तत्र अलोकभिन्नः केवलिनावलोक्यमानो लोकः । स च पञ्चास्तिकायात्मकः कटिन्यस्तहस्तयुग्मवैशाखसंस्थानसंस्थितपादनराकृतिरुत्पत्तिस्थितिव्ययात्मकश्चतुर्दशरज्जुपरिमाण ऊर्ध्वाधस्तिर्यग्भेदभिन्नः ॥

असंख्येययोजनकोटाकोटिप्रमाणा रज्जुः ॥

तत्र रुचकादधो नवशतयोजनान्युल्लंघ्य साधिकसप्तरज्जुप्रमाणो लोकान्तावधिरधोमुखमल्लकाकृतिर्भवनपतिनारकनिवासयोग्योऽधोलोकः ॥

रुचकस्तु रत्नप्रभापरनामकघर्मापृथिव्युपरितनक्षुल्लकप्रतरद्विके मेरुधराधरमध्ये उपर्यधोभावेन स्थितश्चतुरस्राकृतिराकाशप्रदेशाष्टकः ॥

अयञ्च मध्यलोकस्य मध्यं दिग्विदिग्व्यवहारमूलम् ॥

रत्नशर्करावालुकापङ्कधूमतमोमहातमःप्रभापरपर्याया घर्मावंशाशैलाञ्जनारिष्टामघामाघवत्यभिधानास्सप्त पृथिव्योऽधोऽधः पृथुतराः ॥

ताश्च प्रत्येकमनुक्रमतो घनोदधिघनवाततनवाताकाशैर्लब्धप्रतिष्ठा वलयिताश्च ॥

एतस्मिन् लोके रत्नप्रभादिक्रमेणोत्कर्षत एकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमायुष्का जघन्यतो दशवर्षसहस्रैकत्रिसप्तदशसप्तदशद्वाविंशतिसागरोपमायुष्का अनवरताशुभतरलेश्यापरिणामशरीरवेदनाविक्रिया अन्योन्योदीरितदुःखा नारका वसन्ति ॥

रत्नप्रभायाश्चाशीतिसहस्रोत्तरैकलक्षयोजनस्थूलाया योजनसहस्रमुपर्यधश्च विहायान्तर्जघन्यतो दशसहस्रवर्षायुष्काणामुत्कृष्टत किञ्चिदधिकसागरोपमायुष्काणां भवनपतीनां भवनानि वर्तन्ते । तत्रैव भागान्तरे रत्नप्रभीया नारका वसन्ति ॥

द्वात्रिंशदष्टविंशतिविंशत्यष्टादशषोडशाष्टसहस्राधिकलक्षयोजनबाहल्याश्शर्करादयः । अत्र तु नारका एव वसन्ति ॥

उपरितनसहस्रयोजनस्योर्ध्वमधश्च योजनशतं मुक्त्वा मध्ये पिशाचाद्यष्टविधानां जघन्यतो दशसहस्रवर्षायुष्काणामुत्कृष्टत एकपल्योपमायुष्काणां व्यन्तराणां नगराणि सन्ति ॥

ऊर्ध्वशतयोजनेषु चोपर्यधश्च दशयोजनानि



विहाय मध्ये वानव्यन्तरनिकाया निवसन्ति । एते च व्यन्तराणामवान्तरभेदाः ॥

रुचकादुपर्यधश्चाष्टादशशतजयोजनमितो व्यन्तरनरज्योतिषादिनिवासयोग्यो झल्लर्याकृतिस्तिर्यग्विशालश्शुभपरिणामी तिर्यग्लोकः ॥

मध्यलोकाभिधाने तिर्यग्लोके पूर्वपूर्वापेक्षया द्विगुणविस्तारा असंख्याता वलयाकृतयो जम्बूद्वीपादि स्वयम्भूरमणसमुद्रान्ता द्वीपसमुद्रास्सन्ति ॥

मध्ये लक्षयोजनपरिमाणस्य जम्बूद्वीपस्य नाभिरिव भूतलं योजनसहस्रेणावगाहमानश्चत्वारिंशद्योजनमितचूलायुतो नवाधिकनवतिसहस्रयोजनसमुच्छ्रायोऽधो दशयोजनसहस्रं विस्तृत ऊर्ध्वञ्च योजनसहस्रविस्तारो भद्रशालादिभिश्चतुर्भिर्वनैः परिवृतो मेरुभूधरः काञ्चनमयो वर्तुलाकारो विलसति ॥

जम्बूद्वीपे चोत्तरोतरक्रमेणोत्तरदिग्वर्तीनि क्षेत्रव्यवच्छेदकहिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिवर्षधरपर्वतालङ्कृतानि भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतनामभाञ्जि सप्त क्षेत्राणि । एवमेव धातकीखण्डे पुष्करार्धे च द्विगुणानि क्षेत्राणि ॥

मेरुगिरेर्दक्षिणतो निषधस्योत्तरतो देवकुरवः ।

नीलपर्वताद्दक्षिणेन तदुत्तरेणोत्तराः कुरवः । देवकुरूत्तरकुरुभ्योऽन्यत्र भरतैरावतविदेहाः कर्मभूमयः॥

एवं लवणोदकालोदपुष्करोदवरुणोदक्षीरोदघृतोदेक्षुवरोदनन्दीश्वरोदारुणवरोदादिभिस्समुद्रैः क्रमेणान्तरिता जम्बूधातकीखण्डपुष्करवरवरुणवरक्षीरवरघृतवरेक्षुवरनन्दीश्वरारुणवरादयोऽसंख्याताः स्वयम्भूरमणपर्यन्ता द्वीपसमुद्राः परित एकरज्जुविष्कम्भे वर्तन्ते ॥

तत्र पुष्करवरद्वीपार्धं यावन्मानुषं क्षेत्रम् । ततः परं मनुष्यलोकपरिच्छेदकः प्राकाराकारो मानुषोत्तरो नाम भूधरो वर्तते । नास्मात्परतो जन्ममरणे मनुष्याणां जायेते ॥

रुचकाभिधानसमतलादूर्ध्वं नवत्युत्तरसप्तशतयोजनान्तेऽनुक्रमेण जघन्योत्कृष्टतःपल्योपमाष्टमचतुर्थभागायुष्काणां तारकाणां विमानानि । तत ऊर्ध्वं दशयोजनेषु सहस्राधिकपल्योपमायुष्कसूर्यविमानं । तदुपर्यशीतियोजनेषु लक्षाधिकपल्योपमायुष्कचन्द्रविमानं । ततोऽप्यूर्ध्वं विंशतियोजनेषु अर्धपल्यैकपल्योपमायुष्काणां नक्षत्रग्रहाणां विमानानि ॥

एवममी ज्योतिर्गणा एकविंशत्युत्तरैकादशशतयोजनदूरतो मेरुं परिभ्रमन्ति ॥



ततश्चोर्ध्वं किञ्चिदूनसप्तरज्जुपरिमाण ऊर्ध्वीकृतमृदङ्गाकृतिरालोकान्तमूर्ध्वलोकः क्षेत्रत उत्कृष्टशुभपरिणामोपेतः ॥

तत्र च कल्पोपपन्नाः कल्पातीताश्च वैमानिका देवा वसन्ति ॥

सौधर्मैशानसनत्कुमारमाहेन्द्रब्रह्मलोकलान्तकमहाशुक्रसहस्रारानतप्राणतारणाच्युतभेदेन द्वादशविधानि कल्पोपपन्नदेवानां स्थानानि उपर्युपरि भवन्ति । तत्र सौधर्मदेवस्योत्कृष्टतो द्विसागरोपममायुः । ईशानस्य किञ्चिदधिकं द्विसागरोपमं सनत्कुमारस्य सप्तसागरोपमं माहेन्द्रस्य किञ्चिदधिकं तत्, अग्रिमाणाश्च दशचतुर्दशसप्तदशाष्टादशैकोनविंशतिविंशत्येकविंशतिद्वाविंशतिसागरोपमाणि । जघन्यतस्सौधर्मस्य पल्योपमं, ईशानस्य किञ्चिदधिकपल्योपमं, अग्रे तु यदधोऽधो देवानामुत्कृष्टायुरुपरितनदेवानां तज्जघन्यम् ॥

ततश्चोपर्युपरि त्रयोविंशतिसागरोपमात् एकैकाधिकसागरोपमाधिकोत्कृष्टायुष्काणां तदधो देवोत्कृष्टजघन्यायुष्काणां देवानां सुदर्शनसुप्रतिबद्धमनोरमसर्वभद्रविशालसुमनससौमनसप्रीतिकरादित्यभेदतो लोकपुरुषस्य ग्रीवाप्रदेशस्थाः कण्ठाभरणभूता नवग्रैवेयकाभिख्या स्थानविशेषास्सन्ति ॥

ततश्चोपरि पूर्वादिक्रमेण विजयवैजयन्तजयन्तापराजितानि विमानानि सन्ति। मध्ये च सर्वार्थसिद्धविमानम् । आद्यचतुर्विमानस्थानामुत्कृष्टतो द्वात्रिंशत्सागरोपमं जघन्यत एकत्रिंशत्सागरोपममायुः। सर्वार्थसिद्धस्थानान्तु जघन्याभावेनोत्कर्षेण त्रयस्त्रिंशत्सागरोपममायुः । आद्यस्थानद्वयं घनोदधिप्रतिष्ठं तदुपरिस्थानत्रयं वायुप्रतिष्ठं तदुपरिस्थानत्रयं च घनोदधिघनवातप्रतिष्ठं शेषाणि च गुरुलघुगुणवत्त्वादाकाशप्रतिष्ठानि ॥

ग्रैवेयकेषु अनुत्तरे च कल्पातीता देवा निवसन्ति ॥

तत ऊर्ध्वं द्वादशयोजनात् पञ्चचत्वारिंशल्लक्षयोजनपरिमाणा मध्ये चाष्टयोजनबाहल्या अन्ते मक्षिकापक्षवत्कृशतरा उत्तानातपत्राकारा ईषत्प्राग्भाराभिधानाष्टमी स्वच्छस्फटिकरूपा सिद्धशिलापराभिधाना पृथिवी ॥

तत ऊर्ध्वं चतुर्थगव्यूतिषष्ठभागे आलोकान्तं सिद्धानां निवासः ॥

तत्र रुचकात्सौधर्मेशानौ यावत्सार्धरज्जुस्तत आ सनत्कुमारमाहेन्द्रमेकरज्जुस्ततस्सहस्रारं यावत्सार्धं रज्जुद्वयं तस्मादच्युतं यावदेकरज्जुस्तत आलोकान्तं किञ्चिदूनैका रज्जुः ॥



अधोलोकान्तादूर्ध्वलोकान्तं चतुर्दशरज्जुपरिमाणैकरज्जुविस्तृता त्रसनिवासस्थानरूपा त्रसनाडिकाऽस्ति अस्या बहिरेकेन्द्रिया एव निवसन्तीति ॥

नरकादिगतिषु मुहुर्मुहुः परिभ्रमतो मिथ्यादर्शनाद्युपहतचेतसः सम्यग्दर्शनादिनिर्मलार्हद्धर्मावाप्तिर्दुश्शक्येति परिचिन्तनं बोधिदुर्लभभावना । अतो बोधिप्राप्तौ अप्रमादी स्यात् ॥

सम्यग्दर्शनमूलः पञ्चमहाव्रतसाधनो गुप्त्यादिविशुद्धिव्यवस्थानः संसारपारकरो धर्मः परमर्षिणाऽर्हता व्याख्यातः स्वयमप्यनुष्ठितश्चेत्येवं शोचनं धर्मस्वाख्यातभावना । अस्याश्च धर्मे श्रद्धागौरवं तदनुष्ठानासक्तिश्च जायत इति ॥

विशिष्टतपोऽभिग्रहो भिक्षुप्रतिमा । सा द्वादशविधा। आमासं विशिष्टस्थानावस्थितदात्रविच्छिन्नसकृत्प्रदत्तान्नपानपरिग्रहा एकमासिकी प्रतिमा । एवं द्विमासादि यावत्सप्तमासं विशिष्टस्थानावस्थितव्यक्त्या क्रमेण द्वित्रिचतुःपञ्चषट्सप्तवारं प्रदत्तान्नपानपरिग्रहणरूपाः षट् प्रतिमा भाव्याः ॥

सप्ताहोरात्रप्रमाणा एकान्तरनिर्जलोपवासातिम-

का आचाम्लपारणारूपा ग्रामादिभ्यो बहिरूर्ध्वमुखशयनाद्यासनस्थितिपूर्वकघोरोपसर्गसहनरूपा प्रतिमा अष्टमी ॥

उत्कटिकाद्यासनस्थितिपूर्विका पूर्वोक्तैव नवमी प्रतिमा ॥

गोदोहिकाद्यासनस्थितिपूर्विका तादृश्येव दशमी प्रतिमा ॥

निर्जलषष्ठभक्तप्रत्याख्यानपूर्विका ग्रामाद्बहिश्चतुरङ्गुलान्तरचरणविन्यसनरूपा प्रलम्बितबाहुकायोत्सर्गकरणात्मिकाऽहोरात्रप्रमाणा प्रतिमैकादशी ॥

अष्टमभक्तपानीया ग्रामाद्बहिरीषदवनमितोत्तरकाया एकपुद्गलन्यस्तदृष्टिकाऽनिमिषनेत्रा सुगुप्तेन्द्रियग्रामा दिव्यमानुषाद्युपसर्गसहनसमर्था कायोत्सर्गावस्थायिन्येकरात्रिकी प्रतिमा द्वादशी ॥

तत्तद्विषयेभ्यस्तत्तदिन्द्रियाणां विरमणरूपाः पञ्च इन्द्रियनिरोधाः ॥

आगमानुसारेण वस्त्रपात्रादीनां सम्यङ्निरीक्षणपूर्वकं प्रमार्जनं प्रतिलेखना ॥

सा च सूत्रार्थतत्त्वश्रद्धानसम्यक्त्वमिश्रमिथ्यात्वमोहनीयवर्जनकामस्नेहदृष्टिरागपरिहारशुद्धदेवगुरुधर्मादरकुदेवकुगुरुकुधर्मपरिवर्जनज्ञानदर्शनचारित्रादरज्ञानदर्शनचारित्रविराधनापरिहारमनोवचनकायगुप्त्यादरमनोवाक्कायदण्डपरिहाररूपभावनागर्भितवचनोच्चारणपूर्वकवस्त्रादिनिरीक्षणप्रमार्जनरूपा पञ्चविंशतिप्रकारा विज्ञेया ॥



हास्यरत्यरतिपरिहारभयशोकजुगुप्सापरिहारकृष्णनीलकापोतलेश्यापरिहाररसर्द्धिसातगौरवपरिहारमायामिथ्यानिदानशल्यपरिहारक्रोधमानमायालोभपरिहारपृथिव्यप्तेजोवायुवनस्पतित्रसकायरक्षणात्मकभावपूर्णवचनोच्चारणपूर्वकस्वाङ्गप्रमार्जनात्मिका वा सा पञ्चविंशतिरूपोपलक्षणतो बोध्या ॥

प्रागुपदर्शिता गुप्तयस्तिस्रः ॥

साधुनियमविशेषोऽभिग्रहः । स च द्रव्यक्षेत्रकालभावतश्चतुर्विधः ॥

विशिष्टद्रव्यपरिग्रहो द्रव्याभिग्रहः । विशिष्टक्षेत्रस्थदातृसकाशादन्नादिग्रहणं क्षेत्राभिग्रहः । विशिष्टकाल एवान्नादिग्रहणं कालाभिग्रहः । विशिष्टभावयुतदातृसकाशादन्नादिपरिग्रहो भावाभिग्रहः ॥

इति करणनिरूपणम्

तद्वान् चारित्रीत्युच्यते । स पञ्चविधः पुलाकबकुशकुशीलनिर्ग्रन्थस्नातकभेदात् ॥

सङ्घादिप्रयोजनाय सबलचक्रवर्त्तिविध्वंससामर्थ्योपजीवनज्ञानाद्यतिचाराऽऽसेवनान्यतरेण दोषवान् जिनागमादप्रतिपाती च पुलाकः ॥

स द्विविधो लब्धिपुलाकस्सेवापुलाकश्चेति। देवेन्द्रसम्पत्तिसदृशसम्पत्तिमान् लब्धिविशेषयुक्तः पुलाको लब्धिपुलाकः ॥

सेवापुलाकस्तु ज्ञानदर्शनचारित्रलिङ्गयथासूक्ष्मभेदेन पञ्चविधः।

सूत्राक्षराणां स्खलितमिलितादिभिरतिचारैर्ज्ञानमाश्रित्याऽऽत्मनो निस्सारकारी ज्ञानपुलाकः। कुदृष्टिसंस्तवादिभिरात्मगुणघातको दर्शनपुलाकः। मूलोत्तरगुणप्रतिसेवनया चारित्रविराधनेनात्मभ्रंशकश्चारित्रपुलाकः। तत्र मूलगुणा व्रतादयः, उत्तरगुणाः पिण्डविशुद्ध्यादयः। उक्तलिङ्गाधिकलिङ्गग्रहणनिर्हेतुकापरलिङ्गकरणान्यतरस्मादात्मनो निस्सारकर्त्ता लिङ्गपुलाकः। ईषत्प्रमादमनःकरणकाकल्प्यग्रहणान्यतरेणाऽऽत्मभ्रंशको यथासूक्ष्मपुलाकः ॥

देहस्योपकरणानां वाऽलङ्काराभिलाषुकश्चरणमलिनकारी बकुशः। शरीरोपकरणभेदाभ्यां स द्विविधः ॥



शृङ्गाराय तैलादिना दण्डपात्रादीन्युज्ज्वलीकृत्य ग्रहणशील उपकरणबकुशः। अनागुप्तव्यतिरेकेण भूषार्थं करचरणादिप्रक्षालननेत्रादिमलनिस्सारण दन्तक्षालनकेशसंस्काराद्यनुष्ठाता शरीरबकुशः ॥

पुनरपि बकुशः पञ्चविधः। आभोगानाभोगसंवृतासंवृतसूक्ष्मभेदात् ॥

शरीरोपकरणानामलङ्कारस्साधूनामकार्य इति ज्ञानवान् कर्त्ता च बकुश आभोगबकुशः। सहसा च शरीरोपकरणानामलङ्कर्ता बकुश अनाभोगः। लोकैरविदितदोषो बकुशस्संवृतः। प्रकटं दोषानुष्ठाता बकुशोऽसंवृतः। किञ्चित्प्रमादी नेत्रमलाद्यपनयकारी बकुशस्सूक्ष्मबकुशः। एते बकुशास्सामान्येनार्द्धियशस्कामास्सातगौरवाश्रिता अविविक्तपरिवाराश्छेदयोग्यशबलचारित्रा बोध्याः ॥

उत्तरगुणविराधनसंज्वलनकषायोदयान्यतरस्माद्गर्हितचारित्रः कुशीलः। स चाऽऽसेवनाकषायभेदेन द्विविधः ॥

वैपरीत्येन संयमाराधक आसेवनाकुशीलः। अयमेव प्रतिसेवनाकुशील उच्यते। संज्वलनक्रोधाद्युदयाद्गर्हितचारित्रः कषायकुशीलः ॥

द्विविधोऽपि सः पञ्चविधः । ज्ञानदर्शनचरणतपो यथासूक्ष्मभेदात् ॥

ज्ञानदर्शनचरणतपसां वैपरीत्येनाऽऽसेवकाश्चत्वारः प्रतिसेवनाकुशीलाः । शोभनतपस्वित्वप्रशंसाजन्यसन्तोषवान् यथासूक्ष्मप्रतिसेवनाकुशीलः ॥

संज्वलनक्रोधादिभिः ज्ञानदर्शनतपसां स्वाभिप्रेतविषये व्यापारयिता ज्ञानादित्रिविधकषायकुशीलः । कषायाक्रान्तः शापप्रदः कुशीलश्चारित्रकषायकुशीलः । मनसा क्रोधादिकर्त्ता कुशीलो यथासूक्ष्मकषायकुशीलः ॥

निर्गतमोहनीयमात्रकर्मा चारित्री निर्ग्रन्थः । स चोपशान्तमोहो क्षीणमोहश्चेति द्विविधः ॥

संक्रमणोद्वर्तनादिकरणायोग्यतया व्यवस्थापितमोहनीयकर्मोपशान्तमोहः । क्षपितसर्वमोहनीयप्रकृतिको निर्ग्रन्थः क्षपितमोहः ॥

द्विविधोऽपि सः प्रथमाप्रथमचरमाचरमसमय यथासूक्ष्मभेदात् पञ्चविधः ॥

अन्तर्मुहूर्त्तप्रमाणे निर्ग्रन्थकालसमयराशौ प्रथमसमय एव निर्ग्रन्थत्वं प्रतिपद्यमानः प्रथमसमयनिर्ग्रन्थः । अन्यसमयेषु विद्यमानोऽप्रथमसमयनिर्ग्रन्थः ॥



अन्तिमसमये विद्यमानश्चरमसमयनिर्ग्रन्थः । शेषेषु विद्यमानोऽचरमसमयनिर्ग्रन्थः । आद्यौ पूर्वानुपूर्व्या अन्त्यौ च पश्चानुपूर्व्या व्यपदिष्टौ । प्रथमादिसमयाविवक्षया सर्वेषु समयेषु वर्तमानो यथासूक्ष्मनिर्ग्रन्थः ॥

निरस्तघातिकर्मचतुष्टयः स्नातकः । स सयोग्ययोगिभेदेन द्विविधः । मनोवाक्कायव्यापारवान्स्नातकः सयोगी । सर्वथा समुच्छिन्नयोगव्यापारवान्स्नातकोऽयोगी ॥

संयमश्रुतप्रतिसेवनातीर्थलिङ्गलेश्योपपातस्थानैर्विचार्या एते ॥

पुलाकबकुशप्रतिसेवनाकुशीलाः सामायिकसंयमे छेदोपस्थाप्ये च वर्तन्ते । कषायकुशीलाः परिहारविशुद्धौ सूक्ष्मसंपराये च । निर्ग्रन्थाः स्नातकाश्च यथाख्यात एव ॥

पुलाकबकुशप्रतिसेवनाकुशीला उत्कर्षेणानूनैकाक्षराणि दशपूर्वाणि श्रुतानि धारयन्ति । कषायकुशीला निर्ग्रन्थाश्च चतुर्दशपूर्वधराः । जघन्येन

पुलाकानां श्रुतमाचारवस्तु । बकुशकुशीलनिर्ग्रन्था-नामष्टौ प्रवचनमातरः। स्नातकास्तु श्रुतरहिताः केवलज्ञानवत्त्वात् ॥

क्षपाभोजनविरतिसहितपञ्चमूलगुणानामन्यतमं बलात्कारेण प्रतिसेवते पुलाकः। बकुशो मूलगुणाविराधक उत्तरगुणांशे विराधकः । प्रतिसेवनाकुशीलो मूलगुणाविराधक उत्तरगुणेषु काञ्चिद्विराधनां प्रतिसेवते । कषायकुशीलनिर्ग्रन्थस्नातकानां प्रतिसेवना नास्ति ॥

पुलाकादयस्सर्वे सर्वेषां तीर्थकृतां तीर्थेषु भवन्ति ॥

ज्ञानदर्शनचारित्ररूपभावलिङ्गानि सर्वेषां स्युः॥ रजोहरणादिद्रव्यलिङ्गानि तु केषाञ्चित्सर्वदैव भवन्ति केषाञ्चित्कदाचित् केषाञ्चिच नैव भवन्ति ॥

पुलाकस्योत्तरास्तिस्रो लेश्याः । बकुशप्रतिसेवनाकुशीलयोः षडपि । परिहारविशुद्धिस्थकषायकुशीलस्योत्तरास्तिस्रः । सूक्ष्मसंपरायस्थस्य तस्य निर्ग्रन्थस्नातकयोश्च केवला शुक्ला लेश्या। अयोगस्य शैलेशीप्रतिपन्नस्य न काचिदपि भवति ॥

पुलाकस्योपपात आसहस्रारं बकुशप्रतिसेवना-



कुशीलयोर्नवमदशमदेवलोकयोः कषायकुशीलनिर्ग्रन्थयोस्तु सर्वार्थसिद्धे। सर्वेषामपि जघन्यः पल्योपमपृथक्त्वस्थितिके सौधर्मे । स्नातकस्य निर्वाणे ॥

पुलाककषायकुशीलयोर्लब्धिस्थानानि सर्वजघन्यानि। तौ युगपदसंख्येयानि स्थानानि गच्छतः। ततः पुलाको व्युच्छिद्यते । कषायकुशीलस्तु गच्छत्यसंख्येयस्थानान्येककः। ततः कषायकुशीलप्रतिसेवनाकुशीलबकुशा युगपदसंख्येयानि संयमस्थानानि गच्छन्ति। ततो बकुशो व्युच्छिद्यते ततोऽसंख्येयस्थानानि गत्वा प्रतिसेवनाकुशीलो व्युच्छिद्यते ततोऽसंख्येयानि स्थानानि गत्वा कषायकुशीलो व्युच्छिद्यते। अत ऊर्ध्वमकषायस्थानानि निर्ग्रन्थः प्रतिपद्यते। सोऽप्यसंख्येयस्थानानि गत्वा व्युच्छिद्यते, अत ऊर्ध्वस्थानं गत्वा स्नातको निर्वाणं प्राप्नोतीति दिक् ॥

जिज्ञासूनां यथाशास्त्रं सम्यक्चरणमीरितम् ।
स्वरूपेण विधानेन सम्यग्ज्ञानाभिवृद्धये ॥

इति श्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तात्मभक्तिभरेण विजयलब्धिसूरिणा विनिर्मितः तत्त्वन्यायविभाकरस्समाप्तः

## श्रीगुरुचरणसमर्पणम् ।



ख्यातश्रीतपगच्छपुष्करमणेरानन्दसूरीशितु-
दुर्वादिद्विपदर्पभञ्जनमृगाधीशस्य शान्तात्मनः ।
पट्टालङ्कृतसूरिवर्यकमलाचार्यस्य तेजोनिधेः
पादाम्भोजमधुव्रतेन कृतिना तत्पट्टविद्योतिना ॥

इत्थं सङ्गृहतस्तताऽर्हतमतप्रख्याततत्त्वाञ्चितो
ग्रन्थः श्रीगुरुवर्यपादकमले श्रीलब्धिसूरीन्दुना ।
न्यस्तस्तम्भपुरे सतां वितनुतां मोदं चतुर्थ्यां तिथौ
पौषे शुक्लदलेऽब्धितत्त्वनवभूवर्षे बुधे वैक्रमे ॥

